९६ ॐ शरणागतवत्सलाय नमः
९७ ॐ जानकीप्राणदात्रे नमः
९८ ॐ रक्षःप्राणापहारकाय नमः
९९ ॐ पूर्णाय नमः
१०० ॐ सत्याय नमः
१०१ ॐ पीतवाससे नमः
१०२ ॐ दिवाकरसमप्रभाय नमः
१०३ ॐ द्रोणहर्त्रे नमः
१०४ ॐ शक्तिनेत्रे नमः
१०५ ॐ शक्तये नमः
१०६ ॐ राक्षसमारकाय नमः
१०७ ॐ रक्षोघ्नाय नमः
१०८ ॐ रामदूताय नमः
१०९ ॐ शाकिनीजीविकाहराय नमः
११० ॐ बुभुकारहतारातये नमः
१११ ॐ गर्वाय नमः
११२ ॐ पर्वतच्छेदनाय नमः
११३ ॐ हेतवे नमः
११४ ॐ अहेतवे नमः
११५ ॐ प्रांशवे नमः
११६ ॐ विश्वभर्त्रे नमः
११७ ॐ जगद्गुरवे नमः
११८ ॐ जगन्नेत्रे नमः
११९ ॐ जगन्नाथाय नमः
१२० ॐ जगदीशाय नमः
१२१ ॐ जनेश्वराय नमः
१२२ ॐ जगच्छ्रिताय नमः
१२३ ॐ हरये नमः
१२४ ॐ श्रीशाय नमः
१२५ ॐ गरुडस्मयभञ्जकाय नमः
१२६ ॐ पार्थध्वजाय नमः
१२७ ॐ वायुपुत्राय नमः
१२८ ॐ अमितपुच्छाय नमः
१२९ ॐ अमितप्रभाय नमः
१३० ॐ ब्रह्मपुच्छाय नमः
१३१ ॐ परब्रह्मणे नमः
१३२ ॐ पुच्छरोमेष्टाय नमः
१३३ ॐ सुग्रीवादियुताय नमः

१३४ ॐ ज्ञानिने नमः
१३५ ॐ वानराय नमः
१३६ ॐ वानरेश्वराय नमः
१३७ ॐ कल्पस्थायिने नमः
१३८ ॐ चिरंजीविने नमः
१३९ ॐ प्रसन्नाय नमः
१४० ॐ सदाशिवाय नमः
१४१ ॐ सन्नताय नमः
१४२ ॐ सद्गतये नमः
१४३ ॐ युक्तये नमः
१४४ ॐ मुक्तिदाय नमः
१४५ ॐ कीर्तिनायकाय नमः
१४६ ॐ कीर्तये नमः
१४७ ॐ कीर्तिप्रदाय नमः
१४८ ॐ समुद्राय नमः
१४९ ॐ श्रीप्रदाय नमः
१५० ॐ शिवाय नमः
१५१ ॐ उदधिक्रमणाय नमः
१५२ ॐ देवाय नमः
१५३ ॐ संसारभयनाशनाय नमः
१५४ ॐ वालिबन्धकृते नमः
१५५ ॐ विश्वजेत्रे नमः
१५६ ॐ विश्वप्रतिष्ठिताय नमः
१५७ ॐ लङ्कारये नमः
१५८ ॐ कालपुरुषाय नमः
१५९ ॐ लङ्केशगृहभञ्जनाय नमः
१६० ॐ भूतावासाय नमः
१६१ ॐ वासुदेवाय नमः
१६२ ॐ वसवे नमः
१६३ ॐ त्रिभुवनेश्वराय नमः
१६४ ॐ श्रीरामरूपाय नमः
१६५ ॐ कृष्णाय नमः
१६६ ॐ लङ्काप्रासादभञ्जकाय नमः
१६७ ॐ कृष्णाय नमः
१६८ ॐ कृष्णस्तुताय नमः
१६९ ॐ शान्ताय नमः
१७० ॐ शान्तिदाय नमः
१७१ ॐ विश्वपावनाय नमः
१७२ ॐ विश्वभोक्त्रे नमः
१७३ ॐ मारिघ्नाय नमः

१७४ ॐ ब्रह्मचारिणे नमः
१७५ ॐ जितेन्द्रियाय नमः
१७६ ॐ ऊर्ध्वगाय नमः
१७७ ॐ लाङ्गूलिने नमः
१७८ ॐ मालिने नमः
१७९ ॐ लाङ्गूलाहतराक्षसाय नमः
१८० ॐ समीरतनुजाय नमः
१८१ ॐ वीराय नमः
१८२ ॐ वीरमाराय नमः
१८३ ॐ जयप्रदाय नमः
१८४ ॐ जगन्मङ्गलदाय नमः
१८५ ॐ पुण्याय नमः
१८६ ॐ पुण्यश्रवणकीर्तनाय नमः
१८७ ॐ पुण्यकीर्तये नमः
१८८ ॐ पुण्यगीतये नमः
१८९ ॐ जगत्पावनपावनाय नमः
१९० ॐ देवेशाय नमः
१९१ ॐ मितमाराय नमः
१९२ ॐ रामभक्तिविधायकाय नमः
१९३ ॐ धात्रे नमः
१९४ ॐ ध्येयाय नमः
१९५ ॐ भगाय नमः
१९६ ॐ साक्षिणे नमः
९७ ॐ चेत्रे नमः
१९८ ॐ चैतन्यविग्रहाय नमः
१९९ ॐ ज्ञानदाय नमः
२०० ॐ प्राणदाय नमः
२०१ ॐ प्राणाय नमः
२०२ ॐ जगत्प्राणाय नमः
२०३ ॐ समीरणाय नमः
२०४ ॐ विभीषणप्रियाय नमः
२०५ ॐ शूराय नम
२०६ ॐ पिप्पलाश्रयाय नमः
२०७ ॐ सिद्धिदाय नमः
२०८ ॐ सिद्धाश्रयाय नमः
२०९ ॐ कालाय नमः
२१० ॐ कालभक्षकाय नमः
२११ ॐ भर्जिताय नमः
२१२ ॐ लङ्केशनिधनस्थायिने नमः
२१३ ॐ लङ्काविदाहकाय नमः

२१४ ॐ ईश्वराय नमः
२१५ ॐ चन्द्रसूर्याग्निनेत्राय नमः
२१६ ॐ कालाग्नये नमः
२१७ ॐ प्रलयान्तकाय नमः
२१८ ॐ कपीनायकाय नमः
२१९ ॐ कपीशाय नमः
२२० ॐ पुण्यराशये नमः
२२१ ॐ द्वादशराशिगाय नमः
२२२ ॐ सर्वाश्रयाय नमः
२२३ ॐ अप्रमेयात्मने नमः
२२४ ॐ रेवत्यादिनिवारकाय नमः
२२५ ॐ लक्ष्मणप्राणदात्रे नमः
२२६ ॐ सीताजीवनहेतुकाय नमः
२२७ ॐ रामध्येयाय नमः
२२८ ॐ हृषीकेशाय नमः
२२९ ॐ विष्णुभक्ताय नमः
२३० ॐ जटिने नमः
२३१ ॐ बलिने नमः
२३२ ॐ सिद्धाय नमः
२३३ ॐ देवादिदर्पघ्ने नमः
२३४ ॐ होत्रे नमः
२३५ ॐ धात्रे नमः
२३६ ॐ कर्त्रे नमः
२३७ ॐ जगत्प्रभवे नमः
२३८ ॐ नगरग्रामपालाय नमः
२३९ ॐ शुद्धाय नमः
२४० ॐ बुद्धाय नमः
२४१ ॐ निरन्तराय नमः
२४२ ॐ निरञ्जनाय नमः
२४३ ॐ निर्विकल्पाय नमः
२४४ ॐ गुणातीताय नमः
२४५ ॐ भयङ्कराय नमः
२४६ ॐ हनुमते नमः
२४७ ॐ दुराराध्याय नमः
२४८ ॐ तपस्साध्याय नमः
२४९ ॐ अमरेश्वराय नमः
२५० ॐ जानकीघनशोकोत्थतापहर्त्रे नमः
२५१ ॐ पराशराय नमः
२५२ ॐ वाङ्मयाय नमः

२५३ ॐ सदसद्रूपाय नमः
२५४ ॐ कारणाय नमः
२५५ ॐ प्रकृतेपराय नमः
२५६ ॐ भाग्यदाय नमः
२५७ ॐ निर्मलाय नमः
२५८ ॐ नेत्रे नमः
२५९ ॐ पुच्छलङ्काविदाहकाय नमः
२६० ॐ पुच्छबद्धाय नमः
२६१ ॐ यातुधानाय नमः
२६२ ॐ यातुधानरिपुप्रियाय नमः
२६३ ॐ छायापहारिणे नमः
२६४ ॐ भूतेशाय नमः
२६५ ॐ लोकेशाय नमः
२६६ ॐ सद्गतिप्रदाय नमः
२६७ ॐ प्लवङ्गेश्वराय नमः
२६८ ॐ क्रोधाय नमः
२६९ ॐ क्रोधसंरक्तलोचनाय नमः
२७० ॐ क्रोधहर्त्रे नमः
२७१ ॐ तापहर्त्रे नमः
२७२ ॐ भक्ताभयाय नमः
२७३ ॐ वरप्रदाय नमः
२७४ ॐ भक्तानुकम्पिने नमः
२७५ ॐ विश्वेशाय नमः
२७६ ॐ पुरुहूताय नमः
२७७ ॐ पुरन्दराय नमः
२७८ ॐ अग्नये नमः
२७९ ॐ विभावसवे नमः
२८० ॐ भास्वते नमः
२८१ ॐ यमाय नमः
२८२ ॐ निर्ऋतये नमः
२८३ ॐ वरुणाय नमः
२८४ ॐ वायुगतिमते नमः
२८५ ॐ वायवे नमः
२८६ ॐ कुबेराय नमः
२८७ ॐ ईश्वराय नमः
२८८ ॐ रवये नमः
२८९ ॐ चन्द्राय नमः
२९० ॐ कुजाय नमः
२९१ ॐ सौम्याय नमः
२९२ ॐ गुरवे नमः
२९३ ॐ काव्याय नमः

२९४ ॐ शनैश्चराय नमः
२९५ ॐ राहवे नमः
२९६ ॐ केतवे नमः
२९७ ॐ मरुते नमः
२९८ ॐ होत्रे नमः
२९९ ॐ धात्रे नमः
३०० ॐ हर्त्रे नमः
३०१ ॐ समीरजाय नमः
३०२ ॐ मशकीकृतदेवारये नमः
३०३ ॐ दैत्यारये नमः
३०४ ॐ मधुसूदनाय नमः
३०५ ॐ कामाय नमः
३०६ ॐ कपये नमः
३०७ ॐ कामपालाय नमः
३०८ ॐ कपिलाय नमः
३०९ ॐ विश्वजीवनाय नमः
३१० ॐ भागीरथीपदाम्भोजाय नमः
३११ ॐ सेतुबन्धविशारदाय नमः
३१२ ॐ स्वाहाकाराय नमः
३१३ ॐ स्वधाकाराय नमः
३१४ ॐ हविषे नमः
३१५ ॐ कव्याय नमः
३१६ ॐ हव्याय नमः
३१७ ॐ प्रकाशकाय नमः
३१८ ॐ स्वप्रकाशाय नमः
३१९ ॐ महावीराय नमः
३२० ॐ लघवे नमः
३२१ ॐ अमितविक्रमाय नमः
३२२ ॐ डण्डानोड्डीनगतिमते नमः
३२३ ॐ सद्गतये नमः
३२४ ॐ पुरुषोत्तमाय नमः
३२५ ॐ जगदात्मने नमः
३२६ ॐ जगद्योनये नमः
३२७ ॐ जगदन्ताय नमः
३२८ ॐ अनन्तकाय नमः
३२९ ॐ विपाप्मने नमः
३३० ॐ निष्कलङ्काय नमः
३३१ ॐ महते नमः
३३२ ॐ महदहङ्कृतये नमः
३३३ ॐ खाय नमः

३३४ ॐ वायवे नमः
३३५ ॐ पृथिव्यै नमः
३३६ ॐ आपाय नमः
३३७ ॐ वह्नये नमः
३३८ ॐ दिक्पालाय नमः
३३९ ॐ एकस्थाय नमः
३४० ॐ क्षेत्रज्ञाय नमः
३४१ ॐ क्षेत्रहन्त्रे नमः
३४२ ॐ पल्वलीकृतसागराय नमः
३४३ ॐ हिरण्मयाय नमः
३४४ ॐ पुराणाय नमः
३४५ ॐ खेचराय नमः
३४६ ॐ भूचराय नमः
३४७ ॐ मनसे नमः
३४८ ॐ हिरण्यगर्भाय नमः
३४९ ॐ सुत्राम्णे नमः
३५० ॐ राजराजाय नमः
३५१ ॐ विशाम्पतये नमः
३५२ ॐ वेदान्तवेद्याय नमः
३५३ ॐ उद्गीथाय नमः
३५४ ॐ वेदाय नमः
३५५ ॐ वेदाङ्गपारगाय नमः
३५६ ॐ प्रतिग्रामस्थितये नमः
३५७ ॐ सद्यःस्फूर्तिदात्रे नमः
३५८ ॐ गुणाकाराय नमः
३५९ ॐ नक्षत्रमालिने नमः
३६० ॐ भूतात्मने नमः
३६१ ॐ सुरभये नमः
३६२ ॐ कल्पपादाय नमः
३६३ ॐ चिन्तामणये नमः
३६४ ॐ गुणनिधये नमः
३६५ ॐ प्रजाद्वाराय नमः
३६६ ॐ अनुत्तमाय नमः
३६७ ॐ पुण्यश्लोकाय नमः
३६८ ॐ पुरारातये नमः
३६९ ॐ ज्योतिष्मते नमः
३७० ॐ शर्वरीपतये नमः
३७१ ॐ किलकिलिरावसंत्रस्त-भूत-प्रेत-पिशाचकाय नमः
३७२ ॐ ऋणत्रयहराय नमः
३७३ ॐ सूक्ष्माय नमः

३७४ ॐ स्थूलाय नमः
३७५ ॐ सर्वगतये नमः
३७६ ॐ पुंसे नमः
३७७ ॐ अपस्मारहाय नमः
३७८ ॐ स्मर्त्रे नमः
३७९ ॐ श्रुतये नमः
३८० ॐ गाथायै नमः
३८१ ॐ स्मृतये नमः
३८२ ॐ मनवे नमः
३८३ ॐ स्वर्गद्वाराय नमः
३८४ ॐ प्रजाद्वाराय नमः
३८५ ॐ मोक्षद्वाराय नमः
३८६ ॐ यतीश्वराय नमः
३८७ ॐ नादरूपाय नमः
३८८ ॐ परब्रह्मणे नमः
३८९ ॐ ब्रह्मणे नमः
३९० ॐ ब्रह्मपुरातनाय नमः
३९१ ॐ एकाय नमः
३९२ ॐ अनेकाय नमः
३९३ ॐ जनाय नमः
३९४ ॐ शुक्लाय नमः
३९५ ॐ स्वयज्योतिषे नमः
३९६ ॐ अनाकुलाय नमः
३९७ ॐ ज्योतिर्ज्योतिषे नमः
३९८ ॐ अनादये नमः
३९९ ॐ सात्त्विकाय नमः
४०० ॐ राजसाय नमः
४०१ ॐ तमसे नमः
४०२ ॐ तमोहर्त्रे नमः
४०३ ॐ निरालम्बाय नमः
४०४ ॐ निराकाराय नमः
४०५ ॐ गुणाकाराय नम
४०६ ॐ गुणाश्रयाय नमः
४०७ ॐ गुणमयाय नमः
४०८ ॐ बृहत्कायाय नमः
४०९ ॐ बृहद्यशसे नमः
४१० ॐ बृहद्धनुषे नमः
४११ ॐ बृहत्पादाय नमः
४१२ ॐ बृहन्मूर्ध्ने नमः
४१३ ॐ बृहत्स्वनाय नमः
४१४ ॐ बृहत्कायाय नमः
४१५ ॐ बृहन्नासाय नमः
४ ६ ॐ बृहद्बाहवे नमः
४१७ ॐ बृहत्तनवे नमः

४१८ ॐ बृहद्यत्नाय नमः
४१९ ॐ बृहत्कायाय नमः
४२० ॐ बृहत्पुच्छाय नमः
४२१ ॐ बृहत्कराय नमः
४२२ ॐ बृहद्गतये नमः
४२३ ॐ बृहत्सेव्याय नमः
४२४ ॐ बृहल्लोकाय नमः
४२५ ॐ फलप्रदाय नमः
४२६ ॐ बृहच्छक्तये नमः
४२७ ॐ बृहद्वाञ्छाफलदाय नमः
४२८ ॐ बृहदीश्वराय नमः
४२९ ॐ बृहल्लोकनुताय नमः
४३० ॐ द्रष्ट्रे नमः
४३१ ॐ विद्योद्गात्रे नमः
४३२ ॐ जगद्गुरवे नमः
४३३ ॐ देवाचार्याय नमः
४३४ ॐ सत्यवादिने नमः
४३५ ॐ ब्रह्मवादिने नमः
४३६ ॐ कलाधराय नमः
४३७ ॐ सप्तपातालगामिने नमः
४३८ ॐ मलयाचलसंश्रयाय नमः
४३९ ॐ उत्तराशास्थिताय नमः
४४० ॐ श्रीदाय नमः
४४१ ॐ दिव्यौषधीवशाय नमः
४४२ ॐ खगाय नमः
४४३ ॐ शाखामृगाय नमः
४४४ ॐ कपीन्द्राय नमः
४४५ ॐ पुराणाय नमः
४४६ ॐ प्राणचक्षुराय नमः
४४७ ॐ चतुराय नमः
४४८ ॐ ब्राह्मणाय नमः
४४९ ॐ योगिने नमः
४५० ॐ योगगम्याय नमः
४५१ ॐ परावराय नमः
४५२ ॐ अनादये नमः
४५३ ॐ निधनाय नमः
४५४ ॐ व्यासाय नमः
४५५ ॐ वैकुण्ठाय नमः
४५६ ॐ पृथिवीपतये नमः

४५७ ॐ अपराजितये नमः
४५८ ॐ जितरातये नमः
४५९ ॐ सदानन्ददाय नमः
४६० ॐ ईशित्रे नमः
४६१ ॐ गोपालाय नमः
४६२ ॐ गोपतये नमः
४६३ ॐ योध्रे नमः
४६४ ॐ कलये नमः
४६५ ॐ कालाय नमः
४६६ ॐ परात्पराय नमः
४६७ ॐ मनोवेगिने नमः
४६८ ॐ सदायोगिने नमः
४६९ ॐ संहारभयनाशनाय नमः
४७० ॐ तत्त्वदात्रे नमः
४७१ ॐ तत्त्वज्ञाय नमः
४७२ ॐ तत्त्वाय नमः
४७३ ॐ तत्त्वप्रकाशाय नमः
४७४ ॐ शुद्धाय नमः
४७५ ॐ बुधाय नमः
४७६ ॐ नित्ययुक्ताय नमः
४७७ ॐ भक्ताकाराय नमः
४७८ ॐ जगद्रथाय नमः
४७९ ॐ प्रलयाय नमः
४८० ॐ अमितमयाय नमः
४८१ ॐ मायातीताय नमः
४८२ ॐ विमत्सराय नमः
४८३ ॐ मायानिर्जितरक्षसे नमः
४८४ ॐ मायानिर्मितविष्टपाय नमः
४८५ ॐ मायाश्रयाय नमः
४८६ ॐ निर्लेपाय नमः
४८७ ॐ मायानिर्वर्त्तकाय नमः
४८८ ॐ सुखाय नमः
४८९ ॐ सुखाऽसुखप्रदाय नमः
४९० ॐ नागाय नमः
४९१ ॐ महेशकृतसंस्तवाय नमः
४९२ ॐ महेश्वराय नमः
४९३ ॐ सत्यसन्धाय नमः
४९४ ॐ शरभाय नमः
४९५ ॐ कलिपावनाय नमः
४९६ ॐ रसाय नमः
४९७ ॐ रसज्ञाय नमः
४९८ ॐ सन्मानाय नमः

४९९ ॐ रूपाय नमः
५०० ॐ चक्षुषे नमः
५०१ ॐ स्तुतये नमः
५०२ ॐ रवाय नमः
५०३ ॐ प्राणाय नमः
५०४ ॐ गन्धाय नमः
५०५ ॐ स्पर्शाय नमः
५०६ ॐ स्पर्शनाय नमः
५०७ ॐ अहङ्कारमानगाय नमः
५०८ ॐ नेतिनेतीतिगम्याय नमः
५०९ ॐ वैकुण्ठभजनप्रियाय नमः
५१० ॐ गिरिशाय नमः
५११ ॐ गिरिजाकान्ताय नमः
५१२ ॐ दुर्वाससे नमः
५१३ ॐ कवये नमः
५१४ ॐ अङ्गिरसे नमः
५१५ ॐ भृगवे नमः
५१६ ॐ वासिष्ठाय नमः
५१७ ॐ च्यवनाय नमः
५१८ ॐ नारदाय नमः
५१९ ॐ तुम्बराय नमः
५२० ॐ अमलाय नमः
५२१ ॐ विश्वक्षेत्राय नमः
५२२ ॐ विश्वबीजाय नमः
५२३ ॐ विश्वनेत्राय नमः
५२४ ॐ विश्वपाय नमः
५२५ ॐ याजकाय नमः
५२६ ॐ यजमानाय नमः
५२७ ॐ पावकाय नमः
५२८ ॐ पित्रे नमः
५२९ ॐ श्रद्धायै नमः
५३० ॐ बुद्ध्यै नमः
५३१ ॐ क्षमायै नमः
५३२ ॐ तन्द्रायै नमः
५३३ ॐ मन्त्राय नमः
५३४ ॐ मन्त्रयित्रे नमः
५३५ ॐ सुराय नमः
५३६ ॐ राजेन्द्राय नमः
५३७ ॐ भूपतये नमः
५३८ ॐ रुण्डमालिने नमः
५३९ ॐ संसारसारथये नमः
५४० ॐ नित्याय नमः
५४१ ॐ सम्पूर्णकामाय नमः

५४२ ॐ भक्तकामदुघे नमः
५४३ ॐ उत्तमाय नमः
५४४ ॐ गणपाय नमः
५४५ ॐ केशवाय नमः
५४६ ॐ भ्रात्रे नमः
५४७ ॐ पित्रे नमः
५४८ ॐ मात्रे नमः
५४९ ॐ मारुतये नमः
५५० ॐ सहस्रमूर्ध्ने नमः
५५१ ॐ सहस्रास्याय नमः
५५२ ॐ सहस्राक्षाय नमः
५५३ ॐ सहस्रपादाय नमः
५५४ ॐ कामजिते नमः
५५५ ॐ कामदहनाय नमः
५५६ ॐ कामाय नमः
५५७ ॐ काम्यफलप्रदाय नमः
५५८ ॐ मुद्रापहारिणे नमः
५५९ ॐ रक्षोघ्नाय नमः
५६० ॐ क्षितिभारहराय नमः
५६१ ॐ अकलाय नमः
५६२ ॐ नखदंष्ट्रायुधाय नमः
५६३ ॐ विष्णवे नमः
५६४ ॐ भक्ताभयवरप्रदाय नमः
५६५ ॐ दर्पघ्ने नमः
५६६ ॐ दर्पदाय नमः
५६७ ॐ इष्टाय नमः
५६८ ॐ शतमूर्त्तये नमः
५६९ ॐ अमूर्त्तिमते नमः
५७० ॐ महानिधये नमः
५७१ ॐ महाभागाय नमः
५७२ ॐ महागर्भाय नमः
५७३ ॐ महर्द्धिदाय नमः
५७४ ॐ महाकाराय नमः
५७५ ॐ महायोगिने नमः
५७६ ॐ महातेजसे नमः
५७७ ॐ महाद्युतये नमः
५७८ ॐ महाकर्मणे नमः
५७९ ॐ महानादाय नमः
५८० ॐ महामन्त्राय नमः
५८१ ॐ महामतये नमः
५८२ ॐ महाशयाय नमः
५८३ ॐ महोदराय नमः
५८४ ॐ महादेवात्मकाय नमः

५८५ ॐ विभवे नमः
५८६ ॐ रुद्रकर्मणे नमः
५८७ ॐ अकृतकर्मणे नमः
५८८ ॐ रत्ननाभाय नमः
५८९ ॐ कृतागमाय नमः
५९० ॐ अम्भोनिधिलङ्घनाय नमः
५९१ ॐ सिंहाय नमः
५९२ ॐ सत्यधर्माय नमः
५९३ ॐ प्रमोदनाय नमः
५९४ ॐ जितामित्राय नमः
५९५ ॐ जयाय नमः
५९६ ॐ सोमाय नमः
५९७ ॐ विजयाय नमः
५९८ ॐ वायुवाहनाय नमः
५९९ ॐ जीवाय नमः
६०० ॐ धात्रे नमः
६०१ ॐ सहस्रांशवे नमः
६०२ ॐ मुकुन्दाय नमः
६०३ ॐ भूरिदक्षिणाय नमः
६०४ ॐ सिद्धार्थाय नमः
६०५ ॐ सिद्धिदाय नमः
६०६ ॐ सिद्धसङ्कल्पाय नमः
६०७ ॐ सिद्धिहेतुकाय नमः
६०८ ॐ सप्तपातालचरणाय नमः
६०९ ॐ सप्तर्षिगणवन्दिताय नमः
६१० ॐ सप्ताब्धिलंघनाय नमः
६११ ॐ वीराय नमः
६१२ ॐ सप्तद्वीपोरुमण्डलाय नमः
६१३ ॐ सप्ताङ्गराज्यसुखदाय नमः
६१४ ॐ सप्तमातृनिवेशिताय नमः
६१५ ॐ सप्तस्वर्लोकमुकुटाय नमः
६१६ ॐ सप्तहोत्रे नमः
६१७ ॐ स्वराश्रयाय नमः
६१८ ॐ सप्तच्छन्दाय नमः
६१९ ॐ निधये नमः
६२० ॐ सप्तच्छन्दसे नमः
६२१ ॐ सप्तजनाश्रयाय नमः

६२२ ॐ सप्तसामाय नमः
६२३ ॐ उपगीताय नमः
६२४ ॐ सप्तपातालसंश्रयाय नमः
६२५ ॐ बलभीमाय नमः
६२६ ॐ पातालदेवताहन्त्रे नमः
६२७ ॐ शास्त्रे नमः
६२८ ॐ चातुर्यसागराय नमः
६२९ ॐ उद्यद्दक्षिणदोर्दण्डाय नमः
६३० ॐ चपलाङ्गाय नमः
६३१ ॐ प्रतोषकाय नमः
६३२ ॐ वैष्णवाय नमः
६३३ ॐ विश्वरूपात्मने नमः
६३४ ॐ वनारये नमः
६३५ ॐ कल्पभूरुहाय नमः
६३६ ॐ लोहिताङ्गाय नमः
६३७ ॐ गदापाणये नमः
६३८ ॐ धूर्त्ताय नमः
६३९ ॐ सिन्दूरलेपनाय नमः
६४० ॐ कोटिकन्दर्पसौन्दर्याय नमः
६४१ ॐ कपिवृन्दप्रपूजिताय नमः
६४२ ॐ रुद्रावताराय नमः
६४३ ॐ गम्भीराय नमः
६४४ ॐ गम्भीरध्वानसम्भवाय नमः
६४५ ॐ सामगैकशिरोरत्नाय नमः
६४६ ॐ गानविद्याप्रकाशकाय नमः
६४७ ॐ स्वर्णयज्ञोपवीतिने नमः
६४८ ॐ कुमाराय नमः
६४९ ॐ ब्रह्मदीक्षिताय नमः
६५० ॐ अश्रमाय नमः
६५१ ॐ परमोत्साहाय नमः
६५२ ॐ ऐश्वर्यौदार्यसागराय नमः
६५३ ॐ पञ्चाननाय नमः
६५४ ॐ विराडात्मने नमः
६५५ ॐ स्वराजे नमः
६५६ ॐ एकादशाननाय नमः

६५७ ॐ विधिस्तुयाय नमः
६५८ ॐ कृपामूर्तये नमः
६५९ ॐ रामहृदे नमः
६६० ॐ भक्तवत्सलाय नमः
६६१ ॐ अदाह्याय नमः
६६२ ॐ अच्छेद्याय नमः
६६३ ॐ आधाराय नमः
६६४ ॐ वज्राङ्गाय नमः
६६५ ॐ भुजविक्रमाय नमः
६६६ ॐ श्रीरामहृदयानन्दाय नमः
६६७ ॐ चिरायुषे नमः
६६८ ॐ पूर्णपिण्डजाय नमः
६६९ ॐ ध्यानशीलाय नमः
६७० ॐ प्रशान्तात्मने नमः
६७१ ॐ रामनामामृताशनाय नमः
६७२ ॐ मेघरूपाय नमः
६७३ ॐ मेघवृष्टिनिवारकाय नमः
६७४ ॐ मेघजीवनहेतवे नमः
६७५ ॐ मेघश्यामाय नमः
६७६ ॐ परात्मकाय नमः
६७७ ॐ समीरतनयाय नमः
६७८ ॐ बोध्दे नमः
६७९ ॐ तत्त्वविद्याविशारदाय नमः
६८० ॐ अमोघाय नमः
६८१ ॐ अमोघदृष्टये नमः
६८२ ॐ दिष्टदाय नमः
६८३ ॐ अनिष्टनाशाय नमः
६८४ ॐ अर्थाय नमः
६८५ ॐ अनर्थापहारिणे नमः
६८६ ॐ समर्थाय नमः
६८७ ॐ रामसेवकाय नमः
६८८ ॐ अर्थिने नमः
६८९ ॐ धन्याय नमः
६९० ॐ सुरारातये नमः
७९१ ॐ पुण्डरीकाक्षाय नमः
६९२ ॐ आत्मभुवे नमः
६९३ ॐ सङ्कर्षणाय नमः
६९४ ॐ विशुद्धात्मने नमः
६९५ ॐ विद्याराशये नमः
६९६ ॐ सुरेश्वराय नमः

६९७ ॐ अचलोद्धारकाय नमः
६९८ ॐ नित्याय नमः
६९९ ॐ सेतुकृते नमः
७०० ॐ रामसारथये नमः
७०१ ॐ आनन्दाय नमः
७०२ ॐ परमानन्दाय नमः
७०३ ॐ मत्स्याय नमः
७०४ ॐ कूर्माय नमः
७०५ ॐ निधये नमः
७०६ ॐ शूराय नमः
७०७ ॐ वराहाय नमः
७०८ ॐ नारसिंहाय नमः
७०९ ॐ वामनाय नमः
७१० ॐ जमदग्निजाय नमः
७११ ॐ रामाय नमः
७१२ ॐ कृष्णाय नमः
७१३ ॐ शिवाय नमः
७१४ ॐ बुद्धाय नमः
७१५ ॐ कल्किने नमः
७१६ ॐ रामाश्रयाय नमः
७१७ ॐ हराय नमः
७१८ ॐ नन्दिने नमः
७१९ ॐ भृङ्गिणे नमः
७२० ॐ चण्डिने नमः
७२१ ॐ गणेशाय नमः
७२२ ॐ गणसेविताय नमः
७२३ ॐ कर्माध्यक्षाय नमः
७२४ ॐ सुरारामाय नमः
७२५ ॐ विश्रामाय नमः
७२६ ॐ जगतीपतये नमः
७२७ ॐ जगन्नाथाय नमः
७२८ ॐ कपीशाय नमः
७२९ ॐ सर्वावासाय नमः
७३० ॐ सदाश्रयाय नमः
७३१ ॐ सुग्रीवादिस्तुताय नमः
७३२ ॐ दान्ताय नमः
७३३ ॐ सर्वकर्मणे नमः
७३४ ॐ प्लवङ्गमाय नमः
७३५ ॐ नखदारितरक्षसे नमः
७३६ ॐ नखयुद्धविशारदाय नमः
७३७ ॐ कुशलाय नमः
७३८ ॐ सुधनाय नमः
७३९ ॐ शेषाय नमः

७४० ॐ वासुकये नमः
७४१ ॐ तक्षकाय नमः
७४२ ॐ सुवर्णवर्णाय नमः
७४३ ॐ बलाढ्याय नमः
७४४ ॐ पुरजेत्रे नमः
७४५ ॐ अघनाशनाय नमः
७४६ ॐ कैवल्याय नमः
७४७ ॐ कैवल्यदीपाय नमः
७४८ ॐ गरुडाय नमः
७४९ ॐ पन्नगाय नमः
७५० ॐ गुरवे नमः
७५१ ॐ क्लिक्लिरावहतारातये नमः
७५२ ॐ गर्वाय नमः
७५३ ॐ पर्वतभेदनाय नमः
७५४ ॐ वज्राङ्गाय नमः
७५५ ॐ वज्रवज्राय नमः
७५६ ॐ भक्ताय नमः
७५७ ॐ भक्तवज्रनिवारणाय नमः
७५८ ॐ नखायुधाय नमः
७५९ ॐ मणिग्रीवाय नमः
७६० ॐ ज्वालिने नमः
७६१ ॐ मालिने नमः
७६२ ॐ भास्कराय नमः
७६३ ॐ प्रौढप्रतापाय नमः
७६४ ॐ स्तपनाय नमः
७६५ ॐ भक्ततापनिवारकाय नमः
७६६ ॐ शरणाय नमः
७६७ ॐ जीवाय नमः
७६८ ॐ भोक्त्रे नमः
७६९ ॐ नानाचेष्टाय नमः
७७० ॐ चञ्चलाय नमः
७७१ ॐ स्वस्थाय नमः
७७२ ॐ अस्वास्थ्यघ्ने नमः
७७३ ॐ दुःखशातनाय नमः
७७४ ॐ पवनात्मजाय नमः
७७५ ॐ पावनाय नमः
७७६ ॐ पवनाय नमः
७७७ ॐ कान्ताय नमः
७७८ ॐ भक्ताङ्गाय नमः
७७९ ॐ सहनाय नमः
७८० ॐ बलाय नमः

७८१ ॐ मेघनादरिपवे नमः
७८२ ॐ मेघनादसंहतराक्षसाय नमः
७८३ ॐ क्षराय नमः
७८४ ॐ अक्षराय नमः
७८५ ॐ विनीतात्मने नमः
७८६ ॐ वानरेशाय नमः
७८७ ॐ सताङ्गतये नमः
७८८ ॐ श्रीकण्ठाय नमः
७८९ ॐ शितिकण्ठाय नमः
७९० ॐ सहायाय नमः
७९१ ॐ असहनकाय नमः
७९२ ॐ अस्थूलाय नमः
७९३ ॐ अनणवे नमः
७९४ ॐ भर्गाय नमः
७९५ ॐ देवाय नमः
७९६ ॐ संसृतिनाशाय नमः
७९७ ॐ अध्यात्मविद्याय नमः
७९८ ॐ साराय नमः
७९९ ॐ अध्यात्मकुशलाय नमः
८०० ॐ सुधिये नमः
८०१ ॐ अकल्मषाय नमः
८०२ ॐ सत्यहेतवे नमः
८०३ ॐ सत्यदाय नमः
८०४ ॐ सत्यगोचराय नमः
८०५ ॐ सत्यगर्भाय नमः
८०६ ॐ सत्यरूपाय नमः
८०७ ॐ सत्याय नमः
८०८ ॐ सत्यपराक्रमाय नमः
८०९ ॐ अञ्जनीप्राणलिङ्गाय नमः
८१० ॐ वायुवंशोद्भहाय नमः
८११ ॐ अश्रुतये नमः
८१२ ॐ भद्ररूपाय नमः
८१३ ॐ सुरूपाय नमः
८१४ ॐ चित्ररूपधृषे नमः
८१५ ॐ मैनाकवन्दिताय नमः
८१६ ॐ सूक्ष्मदर्शनाय नमः
८१७ ॐ विजयाय नमः
८१८ ॐ जयाय नमः
८१९ ॐ क्रान्तदिङ्मण्डलाय नमः
८२० ॐ रुद्राय नमः

८२१ ॐ प्रकटीकृतविक्रमाय नमः
८२२ ॐ कम्बुकण्ठाय नमः
८२३ ॐ प्रसन्नात्मने नमः
८२४ ॐ ह्रस्वनासाय नमः
८२५ ॐ वृकोदराय नमः
८२६ ॐ लम्बोष्ठाय नमः
८२७ ॐ कुण्डलिने नमः
८२८ ॐ चित्रमालिने नमः
८२९ ॐ योगविदाम्बराय नमः
८३० ॐ विपश्चिते नमः
८३१ ॐ कवये नमः
८३२ ॐ आनन्दविग्रहाय नमः
८३३ ॐ अनन्वशासनाय नमः
८३४ ॐ फल्गुनीसूनवे नमः
८३५ ॐ अव्यग्राय नमः
८३६ ॐ योगात्मने नमः
८३७ ॐ योगतत्पराय नमः
८३८ ॐ योगविदे नमः
८३९ ॐ योगकर्त्रे नमः
८४० ॐ योगयोनये नमः
८४१ ॐ दिगम्बराय नमः
८४२ ॐ अकारादि-हकारान्ताय नमः
८४३ ॐ वर्णनिर्मिताय नमः
८४४ ॐ विग्रहाय नमः
८४५ ॐ उलूखलमुखाय नमः
८४६ ॐ सिद्धाय नमः
८४७ ॐ संस्तुताय नमः
८४८ ॐ प्रथमेश्वराय नमः
८४९ ॐ श्लिष्टजङ्घाय नमः
८५० ॐ श्लिष्टपाणये नमः
८५१ ॐ श्लिष्टजानवे नमः
८५२ ॐ शिखाधराय नमः
८५३ ॐ सुशर्मणे नमः
८५४ ॐ अमितशर्मिणे नमः
८५५ ॐ नारायणपरायणाय नमः
८५६ ॐ जिष्णवे नमः
८५७ ॐ भविष्णवे नमः
८५८ ॐ रोचिष्णवे नमः
८५९ ॐ ग्रसिष्णवे नमः
८६० ॐ स्थास्नवे नमः

८६१ ॐ हरये नमः
८६२ ॐ रुद्रानुकृते नमः
८६३ ॐ वृक्षकम्पनाय नमः
८६४ ॐ भूमिकम्पनाय नमः
८६५ ॐ गुणप्रवाहाय नमः
८६६ ॐ सूत्रात्मने नमः
८६७ ॐ वीतरागाय नमः
८६८ ॐ स्तुतिप्रियाय नमः
८६९ ॐ नागकन्याभयध्वंसिने नमः
८७० ॐ ऋतुपर्णाय नमः
८७१ ॐ कपालभृते नमः
८७२ ॐ अनाकुलाय नमः
८७३ ॐ भगाय नमः
८७४ ॐ अपायाय नमः
८७५ ॐ अनपायाय नमः
८७६ ॐ वेदपारगाय नमः
८७७ ॐ अक्षराय नमः
८७८ ॐ पुरुषाय नमः
८७९ ॐ लोकनाथाय नमः
८८० ॐ ऋक्षप्रभवे नमः
८८१ ॐ दृढाय नमः
८८२ ॐ अष्टाङ्गयोगाय नमः
८८३ ॐ फलभुवे नमः
८८४ ॐ सत्यसन्धाय नमः
८८५ ॐ पुरुष्टुताय नमः
८८६ ॐ श्मशानस्थाननिलयाय नमः
८८७ ॐ प्रेतविद्रावणाय नमः
८८८ ॐ श्रमाय नमः
८८९ ॐ पञ्चाक्षरपराय नमः
८९० ॐ पञ्चमातृकाय नमः
८९१ ॐ रञ्जनाय नमः
८९२ ॐ ध्वजाय नमः
८९३ ॐ योगिने नमः
८९४ ॐ वृन्दवन्द्याय नमः
८९५ ॐ श्रियाय नमः
८९६ ॐ शत्रुघ्नाय नमः
८९७ ॐ अनन्तविक्रमाय नमः
८९८ ॐ ब्रह्मचारिणे नमः
८९९ ॐ इन्द्रियरिपवे नमः
९०० ॐ धृतदण्डाय नमः
९०१ ॐ दशात्मकाय नमः
९०२ ॐ अप्रपञ्चाय नमः

९०३ ॐ सदाकाराय नमः
९०४ ॐ शूरसेनाविदारकाय नमः
९०५ ॐ वृद्धाय नमः
९०६ ॐ प्रमोदाय नमः
९०७ ॐ आनन्दाय नमः
९०८ ॐ सप्तजिह्वपतये नमः
९०९ ॐ धराय नमः
९१० ॐ नवद्वारपुराधाराय नमः
९११ ॐ प्रत्यग्राय नमः
९१२ ॐ सामागायकाय नमः
९१३ ॐ षट्चक्रधाम्ने नमः
९१४ ॐ स्वर्लोकाय नमः
९१५ ॐ भयहृते नमः
९१६ ॐ नामदाय नमः
९१७ ॐ अमदाय नमः
९१८ ॐ सर्ववश्यकराय नमः
९१९ ॐ शक्तये नमः
९२० ॐ अनन्ताय नमः
९२१ ॐ अनन्तमङ्गलाय नमः
९२२ ॐ अष्टमूर्तिधराय नमः
९२३ ॐ नेत्रे नमः
९२४ ॐ विरूपाय नमः
९२५ ॐ स्वरसुन्दराय नमः
९२६ ॐ धूम्रकेतवे नमः
९२७ ॐ महाकेतवे नमः
९२८ ॐ सत्यकेतवे नमः
९२९ ॐ महारथाय नमः
९३० ॐ नन्दीप्रियाय नमः
९३१ ॐ स्वतन्त्राय नमः
९३२ ॐ मेखलिने नमः
९३३ ॐ डमरुप्रियाय नमः
९३४ ॐ लोहाङ्गाय नमः
९३५ ॐ सर्वविदे नमः
९३६ ॐ धन्विने नमः
९३७ ॐ खड्गदाय नमः
९३८ ॐ शर्वाय नमः
९३९ ॐ ईश्वराय नमः
९४० ॐ फलभुजे नमः
९४१ ॐ फलहस्ताय नमः
९४२ ॐ सर्वकर्मफलप्रदाय नमः
९४३ ॐ धर्माध्यक्षाय नमः
९४४ ॐ धर्मफलाय नमः

९४५ ॐ धर्माय नमः
९४६ ॐ धर्मप्रदाय नमः
९४७ ॐ अर्थदाय नमः
९४८ ॐ पञ्चविंशतितत्त्वज्ञाय नमः
९४९ ॐ तारकब्रह्मतत्पतये नमः
९५० ॐ त्रिमार्गवसतिने नमः
९५१ ॐ भीमाय नमः
९५२ ॐ सर्वदुष्टनिर्वहणाय नमः
९५३ ॐ ऊर्जस्वते नमः
९५४ ॐ निष्कलाय नमः
९५५ ॐ शूलिने नमः
९५६ ॐ मालिने नमः
९५७ ॐ गर्जाय नमः
९५८ ॐ निशाचराय नमः
९५९ ॐ रक्ताम्बरधराय नमः
९६० ॐ रक्ताय नमः
९६१ ॐ रक्तमालाविभूषणाय नमः
९६२ ॐ वनमालिने नमः
९६३ ॐ शुभाङ्गाय नमः
९६४ ॐ श्वेताय नमः
९६५ ॐ श्वेताम्बराय नमः
९६६ ॐ यूने नमः
९६७ ॐ जयाय नमः
९६८ ॐ अजेयाय नमः
९६९ ॐ परीवादाय नमः
९७० ॐ सहस्रवदनाय नमः
९७१ ॐ कवये नमः
९७२ ॐ शाकिनी-डाकिनी-यक्ष-रक्षोभूतप्रभञ्जकाय नमः
९७३ ॐ सद्योजाताय नमः
९७४ ॐ कायगतये नमः
९७५ ॐ ज्ञानमूर्त्तये नमः
९७६ ॐ यशस्कराय नमः
९७७ ॐ शम्भुतेजसे नमः
९७८ ॐ सार्वभौमाय नमः
९७९ ॐ विष्णुभक्ताय नमः
९८० ॐ प्लवङ्गमाय नमः
९८१ ॐ चतुर्नवतिमन्त्रज्ञाय नमः
९८२ ॐ पौलस्त्यबलदर्पघ्ने नमः

९८३ ॐ सर्वलक्ष्मीप्रदाय नमः
९८४ ॐ श्रीमते नमः
९८५ ॐ अङ्गदप्रियाय नमः
९८६ ॐ ईतिनुदे नमः
९८७ ॐ स्मृतये नमः
९८८ ॐ बीजाय नमः
९८९ ॐ सुरेशाय नमः
९९० ॐ संसारभयनाशनाय नमः
९९१ ॐ उत्तमाय नमः

९९२ ॐ श्रीपरिवाराय नमः
९९३ ॐ श्रीभुवे नमः
९९४ ॐ उग्राय नमः
९९५ ॐ कामदुघे नमः
९९६ ॐ तारकाय नमः
९९७ ॐ भगवते नमः
९९८ ॐ त्रात्रे नमः
९९९ ॐ स्वस्तिदात्रे नमः
१००० ॐ सुमङ्गलाय नमः

अनेन सहस्रनाम्ना-ऽमुकद्रव्य-समर्पणेन श्रीहनुमद्देवता प्रीयताम् ।

इति आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रि-रचिते हनुमद्-

रहस्ये हनुमत्सहस्रनामावली समाप्ता ।

०

# लांगूलास्त्र-शत्रुञ्जय-हनुमत्स्तोत्रम्

ॐ हनुमन्तं महावीरं वायुतुल्यपराक्रमम् ।
मम कार्यार्थमागच्छ प्रणमामि मुहुर्मुहुः ॥ १ ॥

विनियोग:— ॐ अस्य श्रीहनुमच्छत्रुञ्जयस्तोत्रमालामन्त्रस्य श्रीरामचन्द्र ऋषिः, नानाच्छन्दांसि, श्रीमन्महावीरो हनुमान् देवता, मारुतात्मज इति ह्सौं बीजम्, अञ्जनीसूनुरिति ह्स्फ्रें शक्तिः, ॐ हाहाहा इति कीलकम्, श्रीरामभक्त इति ह्रां प्राणः, श्रीराम-लक्ष्मणानन्दकर इति ह्रां ह्रीं ह्रूं जीवः, ममाऽरातिपराजयनिमित्त-शत्रुञ्जयस्तोत्र-मालामन्त्रजपे विनियोगः ।

करन्यासः—ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्ख्फ्रें ह्सौं नमो हनुमते अंगुष्ठाभ्यां नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं रामदूताय तर्जनीभ्यां नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं लक्ष्मणप्राणदात्रे

---

वायु के समान पराक्रमी, महाबली, हनुमान्‌जी को मैं बार-बार प्रणाम करता हूँ, और प्रार्थना करता हूँ कि मेरे कार्य के लिए आप आइए ॥ १ ॥

विनियोग दाहिने हाथ में जल लेकर, 'ॐ अस्य श्रीहनुमच्छत्रुञ्जय-स्तोत्र-मालामन्त्रस्य' से आरम्भ कर, 'मालामन्त्रजपे विनियोगः' तक मन्त्र पढ़कर जल छोड़ना चाहिए।

करन्यास–'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं... अंगुष्ठाभ्यां नमः' मन्त्र पढ़कर दोनों हाथ की तर्जनी अंगुलियों से दोनों अँगूठों को स्पर्श करे। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं... तर्जनीभ्यां नमः' से दोनों हाथ के अंगूठे से दोनों तर्जनी

मध्यमाभ्यां नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्ख्फ्रें ह्स्रौं अञ्जनीसूनवे अनामिकाभ्यां नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं सीताशोकविनाशनाय कनिष्ठिकाभ्यां नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं लङ्काप्रासादभञ्जनाय करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ।

हृदयादिन्यासः— ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं नमो हनुमते हृदयाय नमः । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं रामदूताय शिरसे स्वाहा । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं लक्ष्मणप्राणदात्रे शिखायै वषट् । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्ख्फ्रें ह्सौं अञ्जनीसूनवे कवचाय हुम् । ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं सीताशोकविनाशनाय नेत्रत्रयाय वौषट् । ॐ ऐं

---

अंगुलियों का स्पर्श करे। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ......मध्यमाभ्यां नमः' मन्त्र से दोनों हाथ के अँगूठों से मध्यमा अंगुलियों को छुए। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं.......अनामिकाभ्यां नमः' इस मन्त्रसे दोनों हाथ की अनामिका अंगुलियों का स्पर्श करे। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं.......कनिष्ठिकाभ्यां नमः' पढ़कर दोनों हाथ के कानी अँगुलियों को छुए। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं...करतल-करपृष्ठाभ्यां नमः' मन्त्र पढ़कर दोनों हथेलियों और उनके पृष्ठभागों का स्पर्श करे।

हृदयादिन्यास—'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं.........हृदयाय नमः' इस मन्त्र से दाहिने हाथ की पाँचों अँगुलियों से हृदय का स्पर्श करे। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं........शिरसे स्वाहा' से शिर का स्पर्श करे। 'ॐ ऐं श्रीं......शिखायै वषट्' से शिखा का स्पर्श करे। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं...कवचाय हुम्' से दाहिने हाथ से बायें कन्धे और बायें हाथ से दाहिने कन्धे का स्पर्श

श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं लङ्काप्रासाद-भञ्जनाय अस्त्राय फट् । इति हृदयादिन्यासः ।

ध्यानम् — ध्यायेद् बाल-दिवाकरद्युतिनिभं देवारि-दर्पापहं
देवेन्द्र-प्रमुखैः प्रशस्तयशसं देदीप्यमानं रुचा ।
सुग्रीवादि-समस्त-वानरयुतं सुव्यक्त-तत्त्वप्रियं
संरक्ताऽरुण-लोचनं पवनजं पीताम्बरालंकृतम् ॥ १ ॥

मनोजवं मारुत-तुल्य-वेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ २ ॥

वज्राङ्गं पिङ्गकेशाढ्यं स्वर्ण-कुण्डल-मण्डितम् ।
नियुद्धमुपसङ्कल्प - परावार - पराक्रमम् ॥ ३ ॥

गदायुक्तं वामहस्तं पाशहस्तं कमण्डलुम् ।
उद्यद्-दक्षिण-दोर्दण्डं हनुमन्तं विचिन्तयेत् ॥ ४ ॥

इति ध्यात्वा, 'अरे मल्ल चटख' इत्युच्चारणेऽथवा 'तोडरमल्ल चटख' इत्युच्चारणे कपिमुद्रां[1] प्रदर्शयेत् ।

---

करना चाहिए। 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं...नेत्र-त्रयाय वौषट्' से दाहिने हाथ की अंगुलियों के अग्रभाग से दोनों नेत्रों का स्पर्श करे और 'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं...अस्त्राय फट्' इस मन्त्र से दोनों हाथ के अँगूठों को चिटका देना चाहिए।

ध्यान—'ध्यायेद् बाल-दिवाकर०' से लेकर 'हनुमन्तं विचिन्तयेत्' तक ध्यान के चार श्लोक पढ़कर श्री हनुमान्जी का ध्यान करे।

इस प्रकार हनुमान्जी का ध्यान कर, 'अरे मल्ल चटख' ऐसा

---

१. वानरी ( कपि ) मुद्रा —
वानरी चाऽस्ति मुद्रेयं तां शृणुष्व वदाम्यहम् ।
करौ सम्पुटितौ कृत्वा समश्लिष्टाङ्गुली स्फुटा ॥

मालामन्त्रः— ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्स्ख्फ्रें ह्सौं नमो हनुमते त्रैलोक्याक्रमण-पराक्रम-श्रीरामभक्त ! मम परस्य च सर्वशत्रून् चतुर्वर्णसम्भवान् पुं-स्त्री-नपुंसकान् भूत-भविष्यद्-वर्तमानान् नानादूरस्थ-समीपस्थान् नाना-नामधेयान् नानासङ्करजातिजान् कलत्र-पुत्र-मित्र - भृत्य-बन्धु-सुहृत्-समेतान् प्रभुशक्ति-सहितान् धन-धान्यादि-सम्पत्तियुतान् राज्ञो राजपुत्र-सेवकान् मन्त्रि-सचिव-सखीन् आत्यन्तिकक्षणेन त्वरया एत-द्दिनावधि नानोपायैर्मारय मारय शस्त्रैश्छेदय छेदय अग्निना ज्वालय ज्वालय दाहय दाहय अक्षयकुमारवत् पादतलाक्रम-णेनाऽनेन शिलातले आत्रोटय आत्रोटय घातय घातय वध वध भूतसङ्घैः सह भक्षय भक्षय क्रुद्धचेतसा नखैर्विदारय विदारय देशादस्मादुच्चाटय उच्चाटय पिशाचवत् भ्रंशय भ्रंशय भ्रामय भ्रामय भयातुरान् विसंज्ञान् सद्यः कुरु कुरु भस्मीभूतान् उद्धूलय

---

पढ़कर अथवा 'तोडरमल्ल चटख' इसका उच्चारण कर श्रीहनुमान्‌जी को कपिमुद्रा दिखावे।

मालामन्त्र—'ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं' से लेकर 'उच्चाटय उच्चाटय

---

तर्जन्यश्चाऽङ्गुलीमूले कृत्वा द्व्यङ्गुष्ठयोरपि।
अङ्गुल्यः पाणयोः सर्वा अन्तर्गर्भस्थिराः कुरु॥
हृदयोपरि स्थितास्तास्तु मुकुलाकृतिसंयुतः।
स्वामिपादे स्थिरा दृष्टिर्मुद्रा स्याच्च स्थिराऽपि तु॥
( ज्ञेयं वानरी मुद्रा चैका मन्त्रपथे ध्रुवा। )

—ह० पं०, श्लोक १४२-१४५, पृष्ठ १४८

उद्धूलय भक्तजनवत्सल ! सीताशोकापहारक ! सर्वत्र माम् एनं च रक्ष रक्ष हाहाहा हुं हुं हुं घे घे घे हुं फट् स्वाहा ॥१॥

ॐ नमो भगवते हनुमते महाबलपराक्रमाय महाविपत्ति-निवारकाय भक्तजनमनःकामना-कल्पद्रुमाय दुष्टजन-मनोरथ-स्तम्भनाय प्रभञ्जनप्राणप्रियाय स्वाहा, ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मम शत्रून् शूलेन छेदय छेदय अग्निना ज्वालय ज्वालय दाहय दाहय उच्चाटय उच्चाटय हुं फट् स्वाहा ॥ २ ॥ इति मालामन्त्रः।

शत्रुञ्जयहनुमत्स्तोत्रम्

श्रीमन्तं हनुमन्त-मार्तरिपुभिद्-भूभृत्तरुभ्राजितं
चाल्यद्-बालधि-बन्धवैरिनिचयं चामीकराद्रिप्रभम् ।
अष्टौ रक्त-पिशङ्ग-नेत्र-नलिनं भ्रूभङ्गमङ्ग-स्फुरत्
प्रोद्यच्चण्ड-मयूख-मण्डल-मुखं दुःखापहं दुःखिनाम् ॥१॥

कौपीनं कटिसूत्र-मौञ्ज्यजिनयुग्देहं विदेहात्मजा
प्राणाधीश-पदारविन्दनिरतं स्वान्तं कृतान्तं द्विषाम् ।
ध्यात्वैवं समराङ्गणस्थितमथानीय स्व-हृत्पङ्कजे
सम्पूज्या-ऽखिल-पूजनोक्त-विधिना-सम्प्रार्थयेत् प्रार्थितम् ॥२॥

---

हुं फट् स्वाहा' तक माला मन्त्र है।

पश्चात् एकाग्र चित्त होकर 'श्रीमन्तं हनुमन्तमार्तरिपुभिद्०' (श्लोक १) से लेकर 'प्रमोदते मारुतजप्रसादात्' (श्लोक २५) तक शत्रुंजयहनुमत्स्तोत्र का पाठ करना चाहिए।

हनुमन्नञ्जनीसूनो ! महाबलपराक्रम ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ३ ॥
मर्कटाधिप ! मार्तण्ड-मण्डल-ग्रास-कारक ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ४ ॥
अक्षयन्नपि पिङ्गाक्ष ! क्षितिशोकक्षयङ्कर ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ५ ॥
रुद्रावतार ! संसार-दुःख-भारापहारक ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ६ ॥
श्रीराम-चरणाम्भोज-मधुपायत-मानस ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ७ ॥
बालि-कोदरद-क्लान्त-सुग्रीवोन्मोचनप्रभो ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ८ ॥
सीता-विरह-वारीश-मग्न-सीतेशतारक ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ९ ॥
रक्षोराज-प्रतापाग्नि-दह्यमान-जगद्वन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १० ॥
ग्रस्ताऽशेष-जगत्-स्वास्थ्य-राक्षसाम्भोधिमन्दर ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ ११ ॥
पुच्छ-गुच्छ-स्फुरद्-भूमि-जगद्-दग्धारिपत्तन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १२ ॥
जगन्मनो-दुरुल्लंघ्य-पारावार-विलङ्घन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १३ ॥

स्मृतमात्र-समस्तेष्ट-पूरक ! प्रणतप्रिय ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १४ ॥
रात्रिञ्चर-चमूराशि-कर्तनैक-विकर्तन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १५ ॥
जानकी-जानकीज्यानि-प्रेमपात्र ! परन्तप ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १६ ॥
भीमादिक-महावीर-वीरावेशावतारक ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १७ ॥
वैदेही-विरहक्लान्त-रामरोषैक-विग्रह ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १८ ॥
वज्राङ्ग-नख-दंष्ट्रेश ! वज्रिवज्रावगुण्ठन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ १९ ॥
अखर्व-गर्व-गन्धर्व-पर्वतोद्भेदन-स्वर ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ २० ॥
लक्ष्मणप्राण-सन्त्राण-त्राता तीक्ष्णकरान्वय ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ २१ ॥
रामाधिविप्रयोगार्त ! भरताद्यार्तिनाशन ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ २२ ॥
द्रोणाचल-समुत्क्षेप-समुत्क्षिप्तारि-वैभव ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ २३ ॥
सीताशीर्वाद-सम्पन्न ! समस्तावयवाक्षत ! ।
लोलल्लाङ्गूलपातेन ममाऽरातीन् निपातय ॥ २४ ॥

इत्येवमश्वत्थ-तलोपविष्टः शत्रुञ्जयं नाम पठेत् स्वयं यः ।
स शीघ्रमेवास्त-समस्तशत्रुः प्रमोदते मारुतज-प्रसादात् ॥३५॥

इति आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रिकृत-हनुमद्-रहस्ये
'शिवदत्ती' हिन्दी-व्याख्यासहितं लाङ्गूलास्त्र-
शत्रुञ्जय-हनुमत्स्तोत्रं सम्पूर्णम् ।

*

## हनुमदष्टकस्तोत्रम्

श्रीरघुराज-पदाब्ज-निकेतन ! पङ्कजलोचन ! मङ्गलराशे !
चण्डमहाभुज-दण्डसुरारि-विखण्डन-पण्डित ! पाहि दयालो ।
पातकिनं च समुद्धर मां महतां हि सतामपि मानमुदारं
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ॥१॥
संसृतिताप-महानलदग्ध-तनूरुहमर्म-तनोरतिवेलं
पुत्र-धन-स्वजनात्म-गृहादिषु सक्तमतेरतिकिल्विषमूर्तेः ।
केनचिदप्यमलेन पुराकृत-पुण्य-सुपुञ्जलवेन विभो वै
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ॥२॥
संसृतिकूप-मनल्पमघोरनिदाघ-निदानमजस्रमशेषं
प्राप्य सुदुःख-सहस्रभुजङ्ग-विषैक-समाकुल-सर्वतनोर्मे !
घोरमहाकृपणापदमेव गतस्य हरे पतितस्य भवाब्धौ
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ॥३॥

संसृतिसिन्धु-विशाल-कराल-महाबलकाल-झषग्रसनार्तं
व्यग्र-समग्रधियं कृपणं च महामद-नक्र-सुचक्र-हतासुम् ।
काल-महारसनोर्मि-निपीडितमुद्धर दीनमनन्यगतिं मां
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ।४।
संसृतिघोर-महागहनेचरतो मणिरञ्जित-पुण्य-सुमूर्तेः
मन्मथभीकर-घोरमहोग्र-मृगप्रवरार्दित-गात्रसुसन्धेः ।
मत्सरताप-विशेष-निपीडित बाह्यमतेश्च कथञ्चिदमेयं
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ।५।
संसृतिवृक्ष-मनेकशताघ-निदानमनन्त-विकर्म-सुशाखं
दुःखफलं करणादिपताशमनङ्ग-सुपुष्पमचिन्त्य-सुमूलम् ।
तं ह्यधिरुह्य हरे पतितं शरणागतमेव विमोचय मूढं
त्वां भजतो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ।६।
संसृतिपन्नग-वक्रभयङ्कर-दंष्ट्र-महाविषदग्ध-शरीरं
प्राणविनिर्गम-भीतिसमाकुल-मन्धमनाथमतीव विषण्णम् ।
मोहमहाकुहरे पतितं दययोद्धर मामजितेन्द्रियकामं
त्वां भजतो मम देहि दयाघन ! हे हनुमत ! स्वपदाम्बुजदास्यम् ।७।
इन्द्रिय-नामक-चौरगणैर्हृत-तत्त्वविवेक-महाधनराशिं
संसृतजाल-निपातितमेव महाबलिभिश्च विखण्डितकायम् ।
त्वत्पदपद्म-मनुत्तममाश्रितमाशु कपीश्वर ! पाहि कृपालो !
त्वां भजनो मम देहि दयाघन ! हे हनुमत् ! स्वपदाम्बुजदास्यम् ।८।
ब्रह्म-मरुद्गण-रुद्र-महेन्द्र-किरीट-सुकोटि-लसत्पदपीठं
दाशरथिं जपति क्षितिमण्डल एष निधाय सदैव हृदब्जे ।

तस्य हनूमत एव शिवङ्करमष्टकमेतदनिष्टहरं वै
यः सततं हि पठेत् स नरो लभतेऽच्युत-रामपदाब्ज-निवासम् ।९।

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिविरचिते हनुमद्-
रहस्ये हनुमदष्टकं सम्पूर्णम् ।

*

## हनुमत्पञ्चरत्नस्तोत्रम्

शंशंशंसिद्धिनाथं प्रणमति चरणं वायुपुत्रं च रौद्रं
वंवंवंविश्वरूपं हहहहहसितं गर्जितं मेघछत्रम् ।
तंतंत्रैलोक्यनाथं तपति दिमरं तं त्रिनेत्रस्वरूपं
कंकंकन्दर्पवश्यं कमलमनहरं शाकिनीकालरूपम् ॥१॥

रंरंरंरामदूतं रणगजदमितं रावणच्छेददक्षं
बंबंबंबालरूपं नतगिरिचरणं कम्पितं सूर्यबिम्बम् ।
मंमंमंमन्त्रसिद्धिं कपिकुलतिलकं मर्दनं शाकिनीनां
हुंहुंहुंकारबीजं हनति हनुमतं हन्यते शत्रुसैन्यम् ॥२॥

दंदंदंदीर्घरूपं धरकरशिखरं पातितं मेघनादं
ऊंऊंउच्चाटितं वै सकलभुवतलं योगिनीवृन्दरूपम् ।
क्षंक्षंक्षंक्षिप्रवेगं क्रमति च जलधिं ज्वालितं रक्षदुर्गं
क्षेंक्षेंक्षेंक्षेमतत्त्वं दनुरुहकुलकं मुच्यते बिम्बकारम् ॥३॥

कंकंकंकालदुष्टं जलनिधितरणं राक्षसानां विनाशे
दक्षं श्रेष्ठ कवीनां त्रिभुवनचरतां प्राणिनां प्राणरूपम् ।
ह्रांह्रांह्रांह्रासतत्त्वं त्रिभुवनरचितं दैवतं सर्वभूते
देवानां च त्रयाणां फणिभुवनधरं व्यापकं वायुरूपम् ॥४॥

त्वंत्वंत्वंवेदतत्त्वं बहुऋचयजुषां साम चाऽथर्वरूपं
कंकंकंकन्दने त्वं ननु कमलतले राक्षसान् रौद्ररूपान् ।
खंखंखखड्गहस्तं झटिति भुवतले त्रोटितं नागपाशं
ॐ ॐ ॐकाररूपं त्रिभुवनपठितं वेदमन्त्राधिमन्त्रम् ॥५॥
संग्रामे शत्रुमध्ये जलनिधितरणे व्याघ्रसिंहे च सर्पे
राजद्वारे च मार्गे गिरिगुहविवरे चोषरे कन्दरे वा ।
भूत-प्रेतादि-युक्ते ग्रहगणविषये शाकिनी-डाकिनीनां
देशे विस्फोटकानां ज्वर-वमन-शिरःपीडने नाशकस्त्वम् ॥६॥

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिविरचिते हनुमद्-
रहस्ये हनुमत्पञ्चरत्नस्तोत्रं सम्पूर्णम् ।

*

## सङ्कष्टमोचनस्तोत्रम्

सिन्दूर-पूर-रुचिरो बलवीर्यसिन्धु-
बुद्धिप्रभावनिधिरद्भुत-वैभवश्रीः ।
दीनार्तिदाव-दहनो वरदो वरेण्यः
सङ्कष्टमोचनविभुस्तनुतां शुभं नः ॥ १ ॥
सोत्साह-लङ्घित-महार्णव-पौरुषश्री-
र्लङ्कापुरी-प्रदहन-प्रथितप्रभावः ।
घोराहव - प्रमथितारि - चमूप्रवीरः
प्राभञ्जनिर्जयति मर्कटसार्वभौमः ॥ २ ॥

द्रोणाचलानयन - वर्णित - भव्यभूतिः
श्रीराम - लक्ष्मण - सहायक - चक्रवर्ती ।
काशीस्थ-दक्षिण-विराजित - सौधमल्लः
श्रीमारुतिर्विजयते भगवान् महेशः ॥ ३ ॥

नूनं स्मृतोऽपि दयते भजतां कपीन्द्रः
सम्पूजितो दिशति वाञ्छित-सिद्धि-वृद्धिम् ।
सम्मोदकप्रिय उपैति परं प्रहर्षं
रामायण - श्रवणतः पठतां शरण्यः ॥ ४ ॥

श्रीभारत - प्रवर - युद्धरथोद्धत - श्रीः
पार्थैक - केतन - कराल - विशालमूर्त्तिः ।
उच्चैर्घनाघन - घटा - विकटाऽट्टहासः
श्रीकृष्णपक्षभरणः शरणं ममाऽस्तु ॥ ५ ॥

जङ्घालजङ्क उपमातिविदूरवेगो
मुष्टि - प्रहार - परिमूर्च्छित-राक्षसेन्द्रः ।
श्रीरामकीर्तित - पराक्रमणोद्भव - श्रीः
प्राकम्पनिर्विभुरुदञ्चतु भूतये नः ॥ ६ ॥

सीतार्त्ति-दारणपटुः प्रबलः प्रतापी
श्रीराघवेन्द्र - परिरम्भवर - प्रसादः ।
वर्णीश्वरः सविधि-शिक्षित - कालनेमिः
पञ्चाननोऽपनयतां विपदोऽधिदेशम् ॥ ७ ॥

उद्यद्-भानुसहस्र-सन्निभतनुः पीताम्बरालङ्कृतः
प्रोज्ज्वालानल-दीप्यमान-नयनो निष्पिष्ट-रक्षोगणः ।

संवर्तोद्यत-वारिदोद्धत-रवः प्रोच्चैर्गदाविभ्रमः
श्रीमान् मारुतनन्दनः प्रतिदिनं ध्येयो विपद्-भञ्जनः ॥८॥

रक्षःपिशाचभय - नाशनमामयाधि-
प्रोच्चैर्ज्वरापहरणं दमनं रिपूणाम् ।
सम्पत्ति - पुत्रकरणं विजयप्रदानं
सङ्कष्टमोचनविभोः स्तवनं नराणाम् ॥ ९ ॥

दारिद्र्य-दुःख-दहनं विजयं विवादे
कल्याण - साधनममङ्गलवारणं च ।
दाम्पत्य - दीर्घसुख - सर्वमनोरथाप्तिं
श्रीमारुतेः स्तवशतावृतिरातनोति ॥१०॥

स्तोत्रं य एतदनुवासरमस्तकामः
श्रीमारुतिं समनुचिन्त्य पठेत् सुधीरः ।
तस्मै प्रसादसुमुखो वरवानरेन्द्रः
साक्षात्कृतो भवति शाश्वतिकः सहायः ॥११॥

सङ्कष्टमोचनस्तोत्रं शङ्कराचार्यभिक्षुणा ।
महेश्वरेण रचितं मारुतेश्चरणेऽर्पितम् ॥ १२ ॥

इति हनुमद्-रहस्ये काशीपीठाधीश्वर-जगद्गुरु-शङ्कराचार्य-स्वामि-श्रीमहेश्वरानन्दसरस्वती-विरचितं सङ्कष्टमोचनस्तोत्रं समाप्तम् ।

*

# हनुमदुपनिषद्

आथर्वणवेदे त्रिपञ्चाशत्तमम् -

ॐ सनकादियोगीन्द्रा अन्ये च ऋषयस्तथा ।
प्रह्लादाद्या विष्णुभक्ता हनुमन्तमिदं जगुः ॥ १ ॥
वायुपुत्र ! महाबाहो ! किं तत्त्वं ब्रह्मवादिनाम् ।
पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ २ ॥
चतुर्वेदेषु शास्त्रेषु विद्यास्वाध्यात्मिकेषु च ।
सर्वेषु विबुधाद्येषु विघ्नसूर्येषु शक्तिषु ॥ ३ ॥
एतेषु मध्ये किं तत्त्वं कथयस्व महाबल ! ।

हनुमानुवाच

भो भो योगीन्द्रा ऋषयो विष्णुभक्तास्तथैव च ॥ ४ ॥
शृणुध्वं मामकीं वाचं भव बन्धविनाशिनीम् ।
एतेषु चैव सर्वेषु तत्त्वं च ब्रह्मतारकम् ॥ ५ ॥
राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ ६ ॥

वायुपुत्रेणोक्ता योगीन्द्रा ऋषयो विष्णुभक्ताः पुनः पप्रच्छुः- हनुमन्तं रामस्याऽङ्गानि तानि नो ब्रूहीति हनुमान् स होवाच । वायुपुत्रो विघ्न-शक्ति-दुर्गाक्षेत्रपाल-सूर्य-रुद्र-नारायण-नारसिंह-वासुदेव-वाराहमन्त्राननन्यान् कांश्चित् सर्वान् मन्त्रान् श्रीसीता-लक्ष्मण-हनुमद्-भरत-शत्रुघ्न-विभीषण-सुग्रीवा-ऽङ्गद-जाम्बवत्प्रणव-मन्त्रारामस्याऽङ्गाभिजनितास्तान् विना रामो विघ्नकरो भवति ।

पुनर्वायुपुत्रेणोक्तास्ते पुनर्हनुमन्तं पप्रच्छुराञ्जनेय ! महाबलविप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यादिति पुनरुवाच हनुमान्। अयोध्यानगरे रम्ये समासीनो रामो मया पृष्टः सीतापते ! योगीन्द्रमानसहंस ! विप्र-गृहस्थानां प्रणवाधिकारः कथं स्यादिति सहोवाच रामो येषां मे षडक्षराधिकारा वर्तन्ते तेषां प्रणवाधिकारः स्यान्नाऽन्येषां प्रणवस्य केवलमकारोकार-मकारार्द्ध-मात्रासहितस्य साद्येन यो राममन्त्रं जपति तस्याऽभय-करोऽहं स्याम्। तस्मात्प्रणवस्याकारस्योकारस्य च मकारस्य चाऽर्द्धमात्रासहितस्य ऋषिछन्दोदेवतातत्त्ववर्णावस्थान-स्वरवेदाग्नीनुच्चार्य न्यास कृत्वा, प्रणवं मन्मन्त्राद् द्विगुणं जप्त्वा, पश्चाद् राममन्त्रमाद्यतः प्रणवं यो जपेत् स रामो भवेदिति रामेणोक्तं तस्माद् रामाङ्गं प्रणवः कथित इति वायुपुत्रेणोक्ताः पुनर्हनुमन्तं पप्रच्छुः। रामभक्तविभीषणकृतां रामपरिचर्यां श्रोतुमिच्छामः। स होवाच हनुमान् विभीषणोक्तरामचर्यायां सप्तसहस्राणि संस्कृतवाक्यानि सप्तसहस्राणि गद्यानि पञ्चशतान्यार्या अष्टौ सहस्राणि श्लोकाश्चतुर्विंशतिसहस्राणि पद्यानि दशसहस्राणि दण्डका इत्येवमनुक्रमं ज्ञात्वा कृतकृत्यो भवेदिति।

इति हनुमद्-रहस्ये हनुमदुपनिषत्समाप्ता।

*

## हनुमत्कल्पम्

देव्युवाच

शैवानि गाणपत्यानि शाक्तानि वैष्णवानि च।
साधनानि च सौराणि चाऽन्यानि यानि कानि च? ॥ १ ॥

एतानि देवदेवेश ! त्वदुक्तानि श्रुतानि च ।
किञ्चिदन्यच्च देवानां साधनं यदि कथ्यताम् ? ॥ २ ॥

शङ्कर उवाच

श्रृणु देवि ! प्रवक्ष्यामि सावधानाऽवधारय ।
हनुमत्साधनं पुण्यं महापातकनाशनम् ॥ ३ ॥
एतद् गुह्यतमं लोके शीघ्रं सिद्धिकरं परम् ।
जयो यस्य प्रसादेन लोकत्रयजितो भवेत् ॥ ४ ॥
तत्साधनविधिं वक्ष्ये नृणां सिद्धिकरं द्रुतम् ।
(वियत्समकरं हनुमते तदनन्तरम्) ॥
रुद्रात्मकाय कवचं फडिति द्वादशाक्षरम् ॥ ५ ॥
अयं यन्त्रः समाख्यातः गोपनीयः प्रयत्नतः ।
तव स्नेहेन भक्त्या च दासोऽस्मि तव सुन्दरि ! ॥ ६ ॥
अयं मन्त्रो ह्यर्जुनाय पुरा दत्तस्तु शौरिणा ।
यो जपेत् साधनं कृत्या जितं सर्वचराऽचरम् ॥ ७ ॥
नदीकूले विष्णुगेहे निर्जने पर्वते वने ।
एकाग्रचित्तमाधाय साधयेत् साधनं महत् ॥ ८ ॥
महाशैलं समुत्पाट्य धावन्तं रावणं प्रति ।
तिष्ठ तिष्ठ रणे दुष्ट ! मम जीवन् विमोक्ष्यसे ॥ ९ ॥
इति ब्रुवन्तं कोपेन क्रोधरक्तमुखाम्बुजम् ।
भोगीन्द्राभं स्वलाङ्गूलमुत्क्षिपन्तं मुहुर्मुहुः ॥१०॥
लाक्षारक्तारुणं रौद्रं कालान्तक-यमोपमम् ।
ज्वलदग्निसमं नेत्रे सूर्यकोटिसमप्रभम् ॥११॥

अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ।
एवं रूपं हनूमन्तं ध्यात्वा यः पूजयेन्मनुम् ॥ १२ ॥
लक्षजापात् प्रसन्नः स्यात् सत्यं ते कथितं मया ।
ध्यानैकमाश्रितः पुंसां सिद्धिरेव न संशयः ॥ १३ ॥
प्रातः स्नात्वा नदीतीरे उपविश्य कुशासने ।
प्राणायामं षडङ्गं च मूलेन सकलं चरेत् ॥ १४ ॥
पुष्पाञ्जल्यष्टकं दत्त्वा ध्यात्वा रामं स-सीतकम् ।
ताम्रपात्रे ततः पद्ममष्टपत्रं स-केसरम् ॥ १५ ॥
रक्त - चन्दन - घृष्टेन लिखेत्तस्य शलाकया ।
कर्णिकायां लिखेन्मन्त्रं तत्राऽऽवाह्य कपिप्रभुम् ॥ १६ ॥
कर्णिकायां यजेद्देवं दत्त्वा पाद्यादिकं ततः ।
गन्ध-पुष्पादिकं चैव नैवेद्यं मूलमन्त्रतः ॥ १७ ॥
सुग्रीवं च हनूमन्तमङ्गदं नलनीलकम् ।
जाम्बवन्तं च कुमुदं केसरिणं दले दले ॥ १८ ॥
पूर्वादिक्रमतो देवि ! पूजयेद् गन्ध-चन्दनैः ।
पवनं चाऽञ्जनीं चैव पूजयेद्दक्षवामतः ॥ १९ ॥
दलाग्रेषु क्रमात् पूज्या लोकपालास्ततः परम् ।
ध्यात्वा जपेन्मन्त्रराजं लक्षं यावत्तु साधकः ॥ २० ॥
लक्षान्ते दिवसं प्राप्य कुर्याच्च पूजनं महत् ।
एकाग्रमनसा धीमांस्तस्मिन् पवननन्दने ॥ २१ ॥
दिवा-रात्रौ जपं कुर्याद् यावत् सन्दर्शनं भवेत् ।
सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ २२ ॥

सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः ।
यथेप्सितं वरं दत्त्वा साधकाय कपिप्रभुः ॥२३॥
सर्वसौख्यमवाप्नोति विहरेदात्मनः सुखैः ।
एतच्च साधनं पुण्यं देवानामपि दुर्लभम् ॥२४॥
तव स्नेहात् समाख्यातं भक्ताऽसि यदि पार्वति ! ॥२५॥

इति गरुडतन्त्रे देवीश्वर-संवादे द्वादशाक्षरसाधनं समाप्तम् ।

हनुमतो विशुद्धं च लिख्यते वीरसाधनम् ।
ब्राह्मे मुहूर्ते चोत्थाय कृतनित्यक्रियो द्विजः ॥ १ ॥
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाऽष्टधा ।
मूलमन्त्रं ततो जप्त्वा सिञ्चेदोमित्यसंख्यया ॥ २ ॥
ततो वासः परीधाय गङ्गातीरेऽथवा गृहे ।

उपविश्य, आं अङ्गुष्ठाभ्यां नमः । आं हृदयाय नमः । इत्यादिना च कराङ्ग-न्यासौ कुर्यात् । ततः प्राणायामः । आकारादि-वर्णमुच्चरन् वामनासापुटेन रेचयेत् । एवं वारत्रयं कृत्वा, मन्त्रवर्णानुच्चरन्नङ्गन्यासं कुर्यात् । ततो ध्यानम्–

ध्यायेद्रणे हनूमन्तं कपिकोटि - समन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वर-शाश्वतम् ॥ १ ॥
लक्ष्मणं च महावीरं पतितं रणभूतले ।
गुरुं च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्वतम् ॥ २ ॥
हाहाकारैः सदन्तैश्च कम्पयन्तं जगत्त्रयम् ।
आब्रह्मस्तम्बपर्यन्तं कृत्वा भीमं कलेवरम् ॥ ३ ॥

इति ध्यात्वाऽष्टसहस्रं जपेत् । अस्य मन्त्रः-

श्रीबीजं पूर्वमुच्चार्य पवनं च ततो वदेत् ।
नन्दन च ततो देयं ङेऽवसानेऽनलप्रिया ॥ ४ ॥
[1]दशार्णोऽयं मनुः प्रोक्तो नराणां सुरपादपः ।

यः सप्तदिवसं महाभयं दत्त्वा, त्रिभागशेषासु निशासु नियमागच्छति यदि साधको मायां तरति, ईप्सितं वरं प्राप्नोति ।

विद्यां वाऽपि धनं वाऽपि राज्यं वा शत्रुनिग्रहम् ।
तत्क्षणादेव चाऽऽप्नोति सत्यं सत्यं सुनिश्चितम् ॥ ५ ॥

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिविरचिते हनुमद्-रहस्ये
हनुमत्कल्पं समाप्तम् ।

*

## हनुमद्व्रत-पूजा-पद्धतिः

तत्राऽऽदौ हनुमद्व्रतं कर्त्तुमारभमाण आचाराऽनुसारेण विशिष्टाचार-परम्पराप्राप्तां यथाशक्तिद्रव्यैः पम्पापूजां करिष्ये, इति सङ्कल्प्य, मार्गशीर्षमासे शुक्लत्रयोदश्यां व्रतं करिष्यमाणः द्वादश्यामेव नियतो ब्रह्मचारी जितेन्द्रियः सम्यग्-रात्रिं यापयित्वा ब्राह्मे मुहूर्ते उत्थाय कर्तव्यं सर्वमालोकयति ।

---

मार्गशीर्ष-शुक्ल त्रयोदशी को हनुमद्व्रत आरम्भ करने वाले व्यक्ति को चाहिए कि वह सर्वप्रथम अपने कुलपरम्परानुसार यथाशक्ति सामग्री से 'पम्पापूजां करिष्ये' इस प्रकार संकल्प कर, मार्गशीर्ष शुक्ल द्वादशी के दिन जितेन्द्रिय एवं ब्रह्मचर्य पालन करता हुआ, उस रात्रि के बाद ब्राह्म मुहूर्त में उठकर इस हनुमद्व्रत को करे ।

---

१. 'श्रीं पवननन्दनाय स्वाहा' इत्ययं हनुमतो दशाक्षरो मन्त्रो ज्ञेयः ।

शौनकाद्या ऊचुः

हनुमद्व्रतसङ्कल्पं कर्त्तुकामोऽब्रवीज्जनः ।
कस्मिन् देशे व्रतं सम्यक् कर्त्तव्यं वद सूतज ! ॥ १ ॥
किं च व्रतं पूर्वतरैः कुत्राऽऽचरितमद्भुतम् ।
सन्ति स्थलानि बहुधा गोष्ठ-वृन्दावनादयः ॥ २ ॥
वापी-कूप-तडागाद्याः कुल्याः कृत्रिम-विस्तृताः ।
नद्यो नदाः सागराद्याः पर्वताः सरितो द्रुमाः ॥ ३ ॥
विचार्य बहुधा तच्च वद नो वदतां वर ! ।

सूत उवाच

साधु पृष्टं महाभागाः सम्यगेवोच्यते मया ॥ ४ ॥
बहवः सन्ति देशाश्च पुण्याः पुण्यविवर्धनाः ।
तथाऽपि वक्ष्ये यद्गुह्यं तच्छृण्वन्तु मुनीश्वराः ॥ ५ ॥

---

शौनकादि ऋषियों ने व्यास जी से कहा—इस हनुमद्-व्रत करने वाले प्राणी को किस देश में इस व्रत को करना चाहिए, यह बताने की कृपा करें ? ॥ १ ॥ पूर्व में इस व्रत को किसने और किस स्थान पर किया ? । कारण कि, यों तो गोशाला, वृन्दावन आदि पुनीत तीर्थ, वापी ( बावली ), कूप, छोटे-बड़े तालाब, नदी, नद, समुद्र, पर्वत, नदियाँ, पुनीत वृक्ष आदि किन स्थानों में इस व्रत को करना चाहिए ? हे मुनिश्रेष्ठ ! यह बताने की कृपा करें ॥ २-३½ ॥

सूत जी ने कहा—हे मुनीश्वरो ! आपने बहुत सुन्दर प्रश्न किया । यद्यपि पुण्यवर्धक अनेक पवित्र देश एवं अनेक स्थान हैं, तथापि मैं अति गोपनीय रहस्य का निरूपण करता हूँ, आप सभी सावधान होकर श्रवण करें ॥ ३½-५ ॥

पूर्वं हनुमतः पूजा कृता पम्पासरित्तटे ।
तस्मात् पम्पासरित्तीरे हनुमद्व्रतमुत्तमम् ॥ ६ ॥
नानादेशेषु कर्तव्या पम्पापूजा प्रयत्नतः ।
ब्राह्मे मुहूर्त्ते चोत्थाय शौचादिभिरतन्द्रितः ॥ ७ ॥
नित्यकर्म-समाप्याऽऽशु योग-क्षेमं समाविशेत् ।
ततश्च पञ्चभिर्वाद्यैरुपेतो बन्धुभिर्वृतः ॥ ८ ॥
तत्रत्यां च नदीं काञ्चिद् गत्वा स्नात्वा च वाग्यतः ।
अघमर्षणमन्त्रैश्च शुचिः प्रयतमानसः ॥ ९ ॥
सन्ध्यावन्दनपूर्वं च नित्यकर्म समाप्य च ।
पितॄन् सन्तर्प्य यत्नेन ललाटे तिलकोज्ज्वलः ॥१०॥
षोडशाऽप्युपचारांश्च पम्पायाः सर्वतो व्रती ॥११॥

---

सर्व-प्रथम महर्षियों ने पम्पासरोवरके तट पर हनुमान्‌जी का पूजन किया। अतएव इस उत्तम हनुमद्-व्रत को पम्पा सरोवर के तट पर ही करना चाहिए ॥ ६ ॥ इस हनुमद्-व्रत के पूजन के पूर्व सर्व-प्रथम सर्वत्र पम्पासरोवर का पूजन करे। साधक को चाहिए कि वह आलस्य रहित होता हुआ ब्राह्म मुहूर्त में उठकर नित्य-नैमित्तिक कर्म समाप्त कर, हनुमान्‌जी के व्रत को इस प्रकार आरम्भ करे। पश्चात् अपने बन्धु-बान्धवों के साथ बैण्ड, शहनाई आदि बाजा बजवाता हुआ अपने स्थान के समीप किसी नदी में स्नान एवं अघमर्षण मन्त्र से अपने को शुद्ध कर, तथा सन्ध्या-वन्दनादि नित्यकर्म समाप्त कर, पितृतर्पण के बाद मस्तक पर सुन्दर तिलक लगाकर, षोडशोपचार पूजन सामग्री से उस नदी में ही पम्पा की भावना कर पूजन करे ॥ ७-११ ॥

पम्पापूजा

आवाहनम्—हेमकूट-गिरिप्रान्त जनानां गिरि-सानुगाम् ।
पम्पामावाहयाम्यस्यां नद्यां हृद्यां प्रयत्नतः ॥१॥

आसनम्—तरङ्गशत-कल्लोलैरिङ्गत्तामरसोज्ज्वले ।
पम्पानदि ! नमस्तुभ्यं गृहाणासनमुत्तमम् ॥२॥

पाद्यम्—हृद्यं सुगन्धसम्पन्नं शुद्धं शुद्धाम्बुसत्कृतम् ।
पाद्यं गृहाण पम्पाख्ये महानदि ! नमोऽस्तु ते ॥३॥

अर्घ्यम्—भागीरथि ! नमस्तुभ्यं सलिलेन सुशोभने ।
अनर्घ्यमर्घ्यमनघे ! गृह्यतामिदमुत्तमम् ॥४॥

आचमनी—पम्पानदि ! महापुण्ये ! सम्पादित-सुशोभने ।
यम्— गोदावरि ! जलेनाऽद्य गृहाणाऽऽचमनीयकम् ॥५॥

पञ्चामृत—दुग्धाऽऽज्येक्षुरसैः पुण्यैर्दध्ना च मधुना तथा ।
स्नानम्— पञ्चामृतैः स्नापयिष्ये पम्पानदि ! नमोऽस्तु ते ॥६॥

शुद्धोदक—शुद्धनीलैः शुद्धजलैर्नारिकेलाम्बुभिस्तथा ।
स्नानम्—पुण्यैः कृष्णानदीतोयैः सिञ्चामि त्वां सरिद्वरे ॥७॥

वस्त्रम्—महामूल्यं च कार्पासं दिव्यवस्त्रमनुत्तमम् ।
पम्पानदि ! महापुण्ये पम्पाशोभाऽतिशोभने ॥८॥

---

पम्पापूजा—'हेमकूट०' से लेकर 'हृद्यां प्रयत्नतः' श्लोक पढ़कर पम्पा का आवाहन करे। 'तरङ्गशत०' श्लोक पढ़कर आसन, 'हृद्यं सुगन्धसम्पन्नं०' से पाद्य ( जल ), 'भागीरथि ! नमस्तुभ्यं०' से अर्घ्य, 'पम्पानदि ! महापुण्ये०' से आचमनीय जल प्रदान करे ॥ १-५ ॥

'दुग्धा-ऽऽज्येक्षुरसैः०' से पंचामृतस्नान, 'शुद्धनीलैः शुद्धजलैः०' से शुद्धोदक स्नान कराकर, 'महामूल्यं च कार्पासं' से वस्त्र, 'श्रौत-

यज्ञोपवी-श्रौत-स्मार्त्तादि-सत्कर्मफलदं पावनं शुभम् ।
तम्— यज्ञोपवीतमधुना कल्पये सरिदुत्तमे ।।९।।

गन्धम्—कर्पूरगुटिकामिश्रं कस्तूर्या च विमर्दितम् ।
यत्नेन कल्पितं गन्धं लेपयेऽङ्गं सरिद्वरे ।।१०।।

अक्षतान्-लक्षणोक्तान् हरिद्राक्तानक्षतांश्चोत्तमाञ्छुभान् ।
पम्पानदि ! गृहाणेमाञ्छुभशोभातिवृद्धये ।।११।।

कुङ्कुमम्—अतसीकुसुमोपेतं पङ्केरुहदलोज्ज्वलम् ।
कुङ्कुमं शङ्करजटासम्भूते सरिदर्पये ।।१२।।

नेत्राञ्जनम्—कज्जलं त्रिजगद्वन्द्ये महापुण्यतरङ्गिणि ।
नेत्रयोः पादमनघं गृह्यतां सरितांवरे ।।१३।।

पुष्पाणि—शतपत्रैश्च कल्हारैः कुमुदैर्बकुलैरपि ।
मल्लिका-जाति-पुन्नागैः केवलैश्चाऽपि चम्पकैः ।।१४।।
तुलसीदाममिश्चाऽपि तथा बिल्वदलैरपि ।
पूजयामि महापुण्ये पम्पानदि नमोऽस्तु ते ।।१५।।

अङ्गपूजा

गोदावर्य्यै नमः, पादौ पूजयामि । कृष्णायै नमः, गुल्फौ

---

स्मार्त्तादि-सत्कर्म' से यज्ञोपवीत चढ़ावे। तत्पश्चात् 'कर्पूरगुटिकामिश्रं०' से गन्ध, 'लक्षणोक्तान् हरिद्राक्तान्०' से अक्षत, 'अतसी-कुसुमोपेतं०' से कुंकुम (रोरी), 'कज्जलं त्रिजगद्वन्द्ये०' से अंजन, 'शतपत्रैश्च कल्हारैः०' से लेकर 'पम्पानदि ! नमोऽस्तु ते' पर्यन्त श्लोक पढ़कर अनेक प्रकार के सुगन्धित पुष्प आदि चढ़ावे ।। ६-१५ ।।

जयाभिपापहारिण्यै नमः, जङ्घे पूजयामि। सुभ्रुवे नमः, जानुनी पूजयामि। ऊरुतरङ्गिण्यै नमः, ऊरू पूजयामि। तडिदुज्ज्वलजवायै नमः, कटिं पूजयामि। अम्बुशोभिन्यै नमः, नितम्बं पूजयामि। अणुमध्यायै नमः, मध्यं पूजयामि। सुस्तनायै नमः, स्तनौ पूजयामि। कम्बुकण्ठायै नमः, कण्ठं पूजयामि। ललितबाहुतरङ्गायै नमः, बाहू पूजयामि। दीर्घवेण्यै नमः, वेणीं पूजयामि। सुवक्त्रायै नमः, वक्त्रं पूजयामि। दुर्वारवारिपूरायै नमः, शिरः पूजयामि। सहस्रमुखायै नमः, सर्वाङ्गं पूजयामि ॥१६॥

धूपम्—स-दशाङ्गं शुभं दिव्य स-गुग्गुलमनुत्तमम्।
साज्यं परिमलोद्भूतं धूपं स्वीकुरु पावने ॥१७॥

दीपम्—साज्यमग्नि-प्रकाशोद्यत् - कोटिसूर्य - समद्युतिम्।
पश्य दीपं प्रसन्नाङ्गे पम्पानदि ! नमोऽस्तु ते ॥१८॥

नैवेद्यम्—शाल्यन्नं स्वर्णपात्रस्थं शाका-ऽपूप-समन्वितम्।
साज्यं दधि-पायसं च नैवेद्यं प्रतिगृह्यताम् ॥१९॥

ताम्बूलम्—पूगैः सुशोभनैश्चाऽपि नागवल्लीदलैर्युतम्।
ताम्बूलं गृह्यतां देवि ! पम्पानदि ! नमोऽस्तु ते ॥२०॥

सुवर्णपुष्पम्-व्रतपूर्ति-महाकीर्ति - दीव्यस्फूर्ति - प्रकीर्तिदम्।
कर्तुकामो व्रतमिदं सौवर्णं पुष्पमर्पये ॥२१॥

---

अंगपूजा—तत्पश्चात् 'गोदावर्य्यै नमः' से लेकर, 'सहस्रमुखायै नमः, सर्वाङ्गं पूजयामि' तक पढ़ कर, प्रत्येक अंगों में पुष्प चढ़ावे ॥१६॥

'स-दशाङ्गं शुभं०' इस श्लोक से धूप, 'साज्यमग्नि०' से दीप, 'शाल्मन्नं स्वर्णपात्रस्थं०' से नाना प्रकार के नैवेद्य का भोग लगाकर, 'पूगैः सुशोभनैश्चाऽपि०' से ताम्बूल प्रदान करे ॥१७-२०॥

प्रदक्षिणाम्—प्रदक्षिणत्रयं देवि ! प्रयत्नेन प्रकल्पितम् ।
पश्याऽद्य पावने देवि ! पम्पानदि ! नमोऽस्तु ते ॥२२॥
नमस्कारम्—नमस्ते नमस्ते विशालोज्ज्वलाङ्गे
नमस्ते नमस्ते लसत्सत्तरङ्गे ।
नमस्ते नमस्ते गिरिप्रान्तरङ्गे
नमस्ते नमस्ते कलद्बर्हिरङ्गे ॥२३॥
क्षमापनम्—अपराधशतं देवि ! मत्कृतं च दिने दिने ।
क्षम्यतां पावने देवि ! पम्पानदि ! नमोऽस्तु ते ॥२४॥
फलश्रुतिः—पम्पानदि ! महापुण्य-तरङ्गिणि ! नमोऽस्तु ते ।
त्वत्तीरे हनुमत्पूजा कृता रामेण धीमता ॥२५॥
मनोरथफलाऽवाप्तिस्तस्याऽभीष्टं न संशयः ।
सुग्रीवेण च तीरेऽस्मिन् कपिवर्यपतेर्व्रतम् ॥२६॥
सत्कृतं च मनोवाञ्छा सद्यस्तस्य बभूव सा ।
अतस्त्वन्नीरपुलिने कृते हनुमतो व्रते ।२७॥

---

तत्पश्चात् 'व्रतपूर्ति-महाकीर्ति०' से सुवर्ण-पुष्प (कटसरैया) समर्पित कर, 'प्रदक्षिणत्रयं देवि !०' से प्रदक्षिणा एवं 'नमस्ते नमस्ते विशालोज्ज्वलाङ्गे०' श्लोक पढ़कर नमस्कार करता हुआ 'अपराधशतं देवि० !' श्लोक से क्षमा-याचना करे ॥ २१-२४ ॥

फलश्रुति—सूतजी ने ऋषियों से कहा—मर्यादापुरुषोत्तम भगवान् राम ने पम्पा तीर पर स्वयं हनुमान्जी का पूजन महापुण्य तरंगों वाले पम्पा सरोवर को नमस्कार करते हुए किया॥ २५ ॥ इस सरोवर का पूजन करने वालों के समस्त मनोरथ निश्चित ही पूर्ण होते हैं, कपिश्रेष्ठ हनुमान्जी का व्रत सुग्रीव ने भी पम्पा तट पर किया ॥ २६ ॥ जिससे

श्रेयांसि मम सर्वाणि न विघ्नानि भवन्त्विह ।
इति सम्प्रार्थ्य पम्पाख्यां नदीं शुभतरङ्गिणीम् ॥२८॥
कलशोदकपाणिश्च गच्छेत् स्वगृहमादरात् ॥२९॥

इति पम्पा-पूजा समाप्ता ।

हनुमत्पूजा

पूर्वोच्चरितैवं गुणेति देशकालौ स्मृत्वा, मयाऽऽचरितस्य व्रतस्य आचीर्यमाणस्य च व्रतस्य सम्पूर्णफलावाप्त्यर्थं भार्यया सह हनुमत्पूजां करिष्ये । तदङ्गत्वेन प्रणवपूर्वकं गणेशपूजनं कृत्वा भुशुद्धिं भूतशुद्धिं च कृत्वा, कलशाऽऽशोधनं कृत्वा, पीठपूजां कुर्यात् ।

---

उनका भी समस्त मनोरथ तत्क्षण पूर्ण हुआ। अतः साधक को चाहिए कि वह भी हनुमद्-व्रत करने के पूर्व इसी प्रकार पम्पा सरोवर के तट पर हमारे व्रत में किसी प्रकार का भी विघ्न न हो तथा समस्त कार्य शुभकारी हो, इस प्रकार शुभ तरंगवाली पम्पा नदी से प्रार्थना करता हुआ तथा कलश में श्रद्धापूर्वक पम्पा का जल लेकर व्रती अपने घर आवे ॥ २७-२९ ॥

इस प्रकार पम्पा-पूजा समाप्त ।

हनुमत्पूजा—साधक को चाहिए कि वह आचमन, प्राणायाम, शान्ति पाठादि कर, हाथ में जल, अक्षत, द्रव्य और पुष्प लेकर, पूर्वोच्चरितैवं' से लेकर 'हनुमत्पूजां करिष्ये' तक वाक्य पढ़कर, जल छोड़ दे। तत्पश्चात् प्रणवपूर्वक गणेश-पूजन, भूशुद्धि, भूतशुद्धि तथा कलश पूजन कर इस प्रकार पीठ-पूजा करे।

पीठस्याऽधोभागे—अतलाय नमः। वितलाय नमः। सुतलाय नमः। रसातलाय नमः। तलाऽतलाय नमः। महातलाय नमः। सप्तपातालाय नमः। तत्राऽगाध-सर्वतो शब्दात्मने नमः। तत्र कमले-कमठाय नमः। तदुपरि-सहस्रमणि-फणाप्रकाशमान-शेषाय नमः। अष्टदिग्गजेभ्यो नमः। तदुपरि-भूमण्डलाय नमः। तदुपरि-भूर्लोकाय नमः। भुवर्लोकाय नमः। स्वर्लोकाय नमः। जनलोकाय नमः। तपोलोकाय नमः। महर्लोकाय नमः। सत्यलोकाय नमः। अष्टदिक्पालकेभ्यो नमः। तन्मध्ये-मेरवे नमः। मेरोर्दक्षिणदिग्भागे-कस्मैचिद्द्रोणशैलाय नमः। तन्मध्ये-सुतरवे नमः। तन्मूले-सुवर्णवेदिकायै नमः। वेद्यां वृक्षस्य पूर्वभागे-नवरत्न-खचित-चारु-रत्नपीठाय नमः। एवं सम्भावयित्वा, पञ्चरङ्गैः स्वस्तिक-शङ्ख-पद्मैश्च रङ्गवल्लि विलिख्य, तन्मध्ये त्रयोदशपद्मं विलिख्य, तदुपरि-शुभ्रतन्दुलान् विनिक्षिप्य, नूतनकलशं स्थापयित्वा, शुद्धोदकेन कलशं पूरयित्वा तदुपरि पीताम्बरं संस्थाप्य, त्रयोदशकमलमालिख्य, मणिकायाम्। 'ॐ नमो भगवते वायुनन्दनाय नमः' इति वर्णबीजानि पूर्वादिदलेषु

---

तत्पश्चात् उस हनुमत्-पीठ पर 'अतलाय नमः' से लेकर 'नवरत्नखचित-चारुरत्नपीठाय नमः' पर्यन्त पढ़कर अक्षत छिड़के। पश्चात् पंचरंग तथा स्वस्तिक, शंख, पद्म आदि से रंगवल्ली का निर्माण कर मध्य में तेरह पद्म ( कमल ) निर्मित कर, उस कमल पर चावल की ढेरी रख, उसपर नवीन कलश रखकर तथा शुद्ध जल से उस कलश को भरकर, उसके ऊपर पीताम्बर रखकर पुनः तेरह कमल निर्मित कर, उसके पत्र में पूर्वादि क्रम से 'ॐ नमो भगवते वायुनन्दनाय नमः'

क्रमेण विलिख्य, त्रयोदशग्रन्थियुक्तं हरिद्रादि-नवदोरकं प्रतिष्ठाप्य, प्राणायामपूर्वकं शुद्धान्तःकरण-उत्तराभिमुख उपविश्य, सीता-समेतं श्रीरामचन्द्रध्यानादि-मानसं कृत्वा, श्रीहनुमन्तमावाहयेत् ।

श्रीहनुमतः प्राणा इह प्राणाः, हनुमतः जीव इह स्थितः, सर्वेन्द्रियाणि वाङ्-मनस्त्वक्-चक्षु-जिह्वा-घ्राण-पाणि-पाद-पायूपस्थानि हनुमत इहागत्य, सुखं चिरं तिष्ठन्तु स्वाहा ।

आवाहनम्—श्रीरामचरणाम्भोज - युगलस्थिरमानसम् ।
आवाहयामि वरदं हनुमन्तमभीष्टदम् ॥ १ ॥

ध्यानम्— कर्णिकार-सुवर्णाभं वर्णनीयं गुणोत्तमम् ।
अर्णवोल्लङ्घनोद्युक्तं तूर्णं ध्यायामि मारुतिम् ॥ २ ॥

आसनम्—नवरत्नमयं दिव्यं चतुरस्रमनूत्तमम् ।
सौवर्णमासनं तुभ्यं कल्पये कपिनायक ! ॥ ३ ॥

पाद्यम्— सुवर्णकलशानीतं सुष्ठु वासितमादरात् ।
पादयोः पाद्यमनघं प्रतिगृह्ण प्रसीद मे ॥ ४ ॥

---

के प्रत्येक वर्ण लिखकर, हल्दी आदि मांगलिक द्रव्य से युक्त तेरह ग्रन्थि (गाँठ) वाले नवीन डोरे को, उस कलश पर प्रतिष्ठिन करे । तत्पश्चात् आचमन, प्राणायाम कर, उत्तराभिमुख बैठकर, सीता समेत श्री रामचन्द्र का मानसिक ध्यान करता हुआ पवनपुत्र श्रीहनुमान्‌जी का आवाहन करे ।

हाथ में अक्षत लेकर 'श्रीहनुमतः प्राणा इह०' से 'चिरं तिष्ठन्तु स्वाहा' पर्यन्त पढ़कर प्राण,प्रतिष्ठा करता हुआ 'श्रीरामचरणाम्भोज०' इस श्लोक से आवाहन करे ॥ १ ॥ तत्पश्चात् 'कर्णिकारसुवर्णाभं०' से ध्यान, 'नवरत्नमयं०' से आसन, 'स्वर्णकलशानीतं०' श्लोक से

अर्घ्यम्— कुसुमाऽक्षत-सम्मिश्रं गृह्यतां कपिपुङ्गव ! ।
दास्यामि तेऽञ्जनीपुत्र ! स्वमर्घ्यं रत्नसंयुतम् ॥ ५ ॥

आचमनम्—महाराक्षस-दर्पघ्न ! सुराधिप-सुपूजित ! ।
विमलं शमलघ्न ! त्वं गृहाणाऽऽचमनीयकम् ॥६॥

पञ्चामृतस्नानम्—मध्वाज्य-क्षीर-दधिभिः स-गुडैर्मन्त्रसंयुतैः ।
पञ्चामृतैः पृथक् स्नानैः सिञ्चामि त्वां कपीश्वर ! ॥ ७ ॥

शुद्धोदकस्नानम्—सुवर्णकलशानीतैर्गङ्गादि-सरिदुद्भवैः ।
शुद्धोदकैः कपीश ! त्वामभिषिञ्चामि मारुते ॥ ८ ॥

कटिसूत्रम्—ग्रथितां नवभी रत्नैर्मेखलां त्रिगुणीकृताम् ।
मौञ्जीं मुञ्जमयीं पीतां गृहाण पवनात्मज ! ॥ ९ ॥

कौपीनम्— कटिसूत्रं गृहाणेदं कौपीनं ब्रह्मचारिणः ।
कौशेयं कपिशार्दूल ! हरिद्राक्तं सुमङ्गलम् ॥१०॥

उत्तरीयम्— पीताम्बर-सुवर्णाभमुत्तरीयार्थमेव च ।
दास्यामि जानकीप्राण-त्राणकरण गृह्यताम् ॥११॥

यज्ञोपवीतम्-श्रौतस्मार्त्तादिकर्तॄणां साङ्गोपाङ्गफलप्रदम् ।
यज्ञोपवीतमनघं धारयानिलनन्दन ! ॥१२॥

---

पाद्य, 'कुसुमाक्षत-सम्मिश्रं०'से अर्घ्य, 'महाराक्षस-दर्पघ्न० 'से आचमन, तथा 'मध्वाज्य-क्षीर-दधिभिः०' से पंचामृत स्नान कराता हुआ 'सुवर्णकलशानीतैः०' से शुद्धोदक स्नान करावे ॥२-८॥

तत्पश्चात् 'ग्रथितां नवभी रत्नैर्मेखलां०' से करधनी, 'कटिसूत्रं गृहाणेदं०' से कौपीन एवं 'पीताम्बर-सुवर्णाभं०' से उत्तरीय वस्त्र, 'श्रौतस्मार्त्तादिकर्तॄणां०' से यज्ञोपवीत धारण करावे ॥९-१२॥

गन्धम्– दिव्यकर्पूर-संयुक्तं मृगनाभि-समन्वितम् ।
स-कुङ्कुमं पीतगन्धं ललाटे धारय प्रभो ! ॥१३॥
अक्षतान्–हरिद्राक्तानक्षतांस्त्वं कुङ्कुमद्रव्यमिश्रितान् ।
धारय श्रीगन्धमध्ये शुभशोभनवृद्धये ॥१४॥
पुष्पाणि – नीलोत्पलैः कोकनदैः कह्लारैः कमलैरपि ।
कुमुदैः पुण्डरीकैस्त्वां पूजयामि कपीश्वर ! ॥१५॥
मल्लिका-जातिपुष्पैश्च पाटलैः कुटजैरपि ।
केतकी - बकुलैश्चूतैः पुन्नागैर्नागकेसरैः ॥१६॥
चम्पकैः शतपत्रैश्च करवीरैर्मनोहरैः ।
पूजये त्वां कपिश्रेष्ठ ! स-बिल्वैस्तुलसीदलैः ॥१७॥

ग्रन्थिपूजा

अञ्जनीसूनवे नमः, प्रथमग्रन्थिं पूजयामि । हनुमते नमः, द्वितीयग्रन्थिं पूजयामि । वायुपुत्राय नमः, तृतीयग्रन्थिं पूजयामि । महाबलाय नमः, चतुर्थग्रन्थिं पूजयामि । रामेष्टाय नमः, पञ्चमग्रन्थिं पूजयामि । फाल्गुनसखाय नमः, षष्ठग्रन्थिं पूजयामि । पिङ्गाक्षाय नमः, सप्तमग्रन्थिं पूजयामि । अमितविक्रमाय नमः, अष्टमग्रन्थिं पूजयामि । कपीश्वराय नमः, नवमग्रन्थिं पूजयामि । सीताशोकविनाशनाय नमः, दशमग्रन्थिं पूजयामि । लक्ष्मणप्राण-

---

तदनन्तर 'दिव्यकर्पूरसंयुक्तं०' से गन्ध, 'हरिद्राक्तानक्षतां०' से अक्षत, 'नीलोत्पलैः०' से लेकर 'स-बिल्वैस्तुलसीदलैः' तक श्लोक पढ़कर, अनेक प्रकार के सुगन्धित पुष्प समर्पित करे ॥१३-१७॥

तत्पश्चात् नवीन डोरे की तेरह ग्रन्थियों का क्रमशः, 'अञ्जनीसूनवे

दात्रे नमः, एकादशग्रन्थिं पूजयामि । दशग्रीवदर्पघ्नाय नमः, द्वादशग्रन्थिं पूजयामि । भविष्यद्-ब्रह्मणे नमः, त्रयोदशग्रन्थिं पूजयामि ।

इति ग्रन्थिपूजा समाप्ता ।

अङ्गपूजा

हनुमते नमः, पादौ पूजयामि । सुग्रीवसखाय नमः, गुल्फौ पूजयामि । अङ्गदमित्राय नमः, जङ्घे पूजयामि । रामदासाय नमः, ऊरू पूजयामि । अक्षघ्नाय नमः, कटिं पूजयामि । लङ्कादहनाय नमः, वालं पूजयामि । राममणिदाय नमः, नाभिं पूजयामि । सागरोल्लङ्घनाय नमः, मध्यं पूजयामि । लङ्कामर्दनाय नमः, केशावलिं पूजयामि । सञ्जीवनीहर्त्रे नमः, स्तनौ पूजयामि । सौमित्रिप्राणदाय नमः, वक्षः पूजयामि । कुण्ठितदशकण्ठाय नमः, कण्ठं पूजयामि । रामाभिषेककारिणे नमः, हस्तौ पूजयामि । मन्त्ररचितरामायणाय नमः, वक्त्रं पूजयामि । प्रसन्नवदनाय नमः, वदनं पूजयामि । पिङ्गनेत्राय नमः, नेत्रे पूजयामि । श्रुति-पारगाय नमः, श्रुतिं पूजयामि । ऊर्ध्वपुण्ड्रधारिणे नमः, कपोलं पूजयामि । मणिकण्ठमालिने नमः, शिरः पूजयामि । सर्वाभीष्ट-प्रदाय नमः, सर्वाङ्गं पूजयामि ।

---

नमः' से लेकर 'भविष्यद्-ब्रह्मणे नमः' पर्यन्त पढ़कर पूजन करे ।

तदनन्तर 'हनुमते नमः, पादौ पूजयामि' से लेकर, 'सर्वाभीष्टप्रदाय नमः, सर्वाङ्गं पूजयामि' तक पढ़कर, श्रीहनुमान्‌जी के समस्त अंगों का

दिव्यं सुगुग्गुलं साज्यं स-दशाङ्गं स-वह्निकम् ।
गृहाण मारुते ! धूपं सुप्रियं घ्राणतर्पणम् ॥ १८ ॥
इति श्रीहनुमते धूपं समर्पयामि ।
घृतपूरितमुज्ज्वालं सितसूर्यसमप्रभम् ।
अतुलं तव दास्यामि व्रतपूर्त्यै सुदीपकम् ॥ १९ ॥
इति श्रीहनुमते दीपं समर्पयामि ।
स-शाका-ऽपूप-सूपाढ्य-पायसानि च यत्नतः ।
स-क्षीर-दधि-साज्यं च सापूपं घृतपाचितम् ॥ २० ॥
इति श्रीहनुमते नैवेद्यं समर्पयामि ।
गोदावरीजलं शुद्धं स्वर्णपात्राऽऽहृतं प्रियम् ।
पानीयं पावनोद्भूतं स्वीकुरु त्वं दयानिधे ! ॥ २१ ॥
इति श्रीहनुमते पानीयं समर्पयामि ।
आपोशनं नमस्तेऽस्तु पापराशितृणानलम् ।
कृष्णावेणीजलेनैव कुरुष्व पवनात्मज ! ॥ २२ ॥
इति श्रीहनुमते उत्तरापोशनं समर्पयामि ।
दिवाकर-सुतानीत-जलेन स्पर्शगन्धिना ।
हस्तप्रक्षालनार्थाय स्वीकुरुष्व दयानिधे ! ॥ २३ ॥
इति श्रीहनुमते हस्तप्रक्षालनं समर्पयामि ।

---

पूजन करता हुआ 'दिव्यं सुगुग्गुलं०' इस श्लोक से धूप जलावे ॥१८॥ तत्पश्चात् 'घृतपूरित०' से दीप, 'सशाकाऽपूप०'से नैवेद्य, 'गोदावरीजलं शुद्धं' से लज, 'आपोशनं नमस्तेऽस्तु०' से उत्तरापोशन, 'दिवाकर-

रघुवीर - पदन्यास - स्थिरमानस - मारुते ! ।
कावेरीजलपूर्णेन स्वीकुर्वाचमनीयकम् ॥ २४ ॥
इति श्रीहनुमते शुद्धाचमनीयं समर्पयामि ।
वायुपुत्र ! नमस्तुभ्यं पुष्पं सौवर्णकं प्रियम् ।
पूजयिष्यामि ते मूर्ध्नि नवरत्न-समुज्ज्वलम् ॥ २५ ॥
इति श्रीहनुमते सुवर्णपुष्पं समर्पयामि ।
ताम्बूलमनघ स्वामिन् ! प्रयत्नेन प्रकल्पितम् ।
अवलोकय नित्यं त्वं पुरतो रचितं मया ॥ २६ ॥
इति श्रीहनुमते ताम्बूलं समर्पयामि ।
शतकोटि - महारत्न - दिव्य - सद्रत्नपात्रके ।
नीराजनमिदं दृष्टेरतिथीकुरु मारुते ! ॥ २७ ॥
इति श्रीहनुमते नीराजनं समर्पयामि ।
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानर अमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ २८ ॥
इति मन्त्रेण श्रीहनुमते पुष्पाञ्जलिं समर्पयामि ।
पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः ।
त्राहि मां पुण्डरीकाक्ष ! त्वमेव शरणं मम ॥ २९ ॥
इति श्रीहनुमते प्रदक्षिणां समर्पयामि ।

---

सुता०' से हस्त प्रक्षालन, 'रघुवीरपदन्यास०' से शुद्ध आचमनीय जल प्रदान करता हुआ, 'वायुपुत्र नमस्तुभ्यं०' से हनुमान्जी को सुवर्णपुष्प ( कटसरैया ) चढ़ावे ॥१९-२५॥

उसी प्रकार 'ताम्बूलमनघ०' से ताम्बूल तथा 'शतकोटि-महारत्न०' से आरती कर 'मूर्धानं दिवः०' इस मन्त्र से पुष्पांजलि, 'पापोऽहं०'

नमस्तेऽस्तु महावीर ! नमस्ते वायुनन्दन ! ।
विलोक्य कृपया नित्यं त्राहि मां भक्तवत्सल ! ॥३०॥
इति श्रीहनुमते नमस्कारं समर्पयामि ।

ये पुत्र-पौत्रादि-समस्तभाग्यं, वाञ्छन्ति वायोस्तनयं प्रपूज्य ।
त्रयोदशग्रन्थियुत तदङ्गं बध्नन्ति हस्ते वरदोरसूत्रम् ॥३१॥

दोरग्रहणम्—अञ्जनीगर्भसम्भूत ! रामकार्यार्थसम्भव ।
वरदोरकृताभासा रक्ष मां प्रतिवत्सरम् ॥३२॥

पूर्वदोरकोत्तारणम्—अनेन भगवन् कार्यं प्रतिपादकविग्रहम् ।
हनूमान् प्रीणयित्वा च प्रार्थितो हृदि तिष्ठतु ॥३३॥

प्रार्थना—यस्य स्मृत्या च नामोक्त्या तपो-यज्ञ-क्रियादिषु ।
न्यूनं सम्पूर्णतां यातु सद्यो याति पराङ्गतिम् ॥३४॥

वायनदानम्— तदङ्गत्वेन ब्राह्मणपूजनम् ।
ददाति प्रतिगृह्णाति हनूमानेव न स्वयम् ।
व्रतस्याऽस्य च पूर्त्यर्थं प्रतिगृह्णातु वायनम् ॥३५॥

इति वायनमन्त्रः ।

इति हनुमद्-रहस्ये हनुमद्-व्रत-पूजापद्धतिः समाप्ता ।

*

---

से प्रदक्षिणा, 'नमस्तेऽस्तु महावीर०' इससे नमस्कार करे ॥२६-३०॥

तत्पश्चात् 'ये पुत्र-पौत्रादि०' से तेरह ग्रन्थिवाला नवीन डोरा धारण कर, 'अञ्जनीगर्भसम्भूत०' से पुराना डोरा उतार दे। तदनन्तर 'अनेन भगवन् कार्य०' से नमस्कार पूर्वक 'यस्य स्मृत्या०' से ग्यारह बार 'विष्णवे नमः' का उच्चारण कर, 'ददाति प्रतिगृह्णाति०' से ब्राह्मण को वायन प्रदान करे ॥३१-३५॥

इस प्रकार हनुमद्-रहस्य में हनुमद्-व्रतपूजा-पद्धति समाप्त ।

## हनुमद्-व्रतोद्यापन-विधिः

यजमानो महानद्यां माध्याह्निकस्नानं कृत्वा, नित्यकर्म विधायाऽऽचार्य-ब्रह्म-ऋत्विग्भिः सहोपविश्य, प्राणानायम्य, एवं गुणेत्यादि शुभतिथौ धर्मपत्नीसमेतस्य मम हनुमद्-व्रतकल्पोक्त-सम्पूर्णफलाऽवाप्तये धर्माऽर्थ-काम-मोक्ष-चतुर्विध-पुरुषार्थसिद्ध्यर्थं श्रीमदाञ्जनेयप्रीत्यर्थं च हनुमद्-व्रतोद्यापनाख्यं कर्म करिष्ये ।

अस्मिन् कर्मणि आचार्यत्वं भवन्तः कुर्वन्त्विति वेदवेत्तारं कुटुम्बिनं वित्तहीनं शान्तमाचारवन्तं ब्राह्मणमाचार्यत्वे नियोज्य, एवं लक्षणसंयुक्तमपरं ब्राह्मणं ब्रह्मत्वे नियोज्य, ततः त्रयोदशकलशावाहनार्थं त्रयोदशब्राह्मणानृत्विग्विधौ नियोज्य, एवमावरणं कृत्वा, ततो निष्कमात्रसुवर्णेन, तदर्धेन यथा-शक्त्या हनुमत्प्रतिमां कृत्वा, प्राणानायम्य, हनुमद्-व्रतो-द्यापनाङ्गत्वेन पम्पापूजां कृत्वा, पुनः प्राणानायम्य, शुभतिथौ धर्मपत्नीसमेतस्य मम मनोवाञ्छाफलसिद्ध्यर्थं श्रीमदाञ्जनेय-प्रीत्यर्थमाञ्जनेयप्रतिमापूजां करिष्ये । इति सङ्कल्प्य, तत्प्रतिमा-

---

उद्यापन—यजमान को चाहिए कि वह नदी में माध्याह्निक स्नान एवं नित्य कर्म कर, आचार्य, ब्रह्मा एव होताओं के साथ मण्डप में बैठकर आचमन, प्राणायाम कर हाथ में जल लेकर, 'एवं गुणेत्यादि०' से 'उद्यापनाख्यं कर्म करिष्ये' पर्यन्त पढ़कर भूमि पर जल छोड़ दे।

तत्पश्चात्—आचार्य, ब्रह्मा तथा तेरह कलशों के आवाहन के लिए तेरह ऋषियों का वरण कर, एक तोला अथवा आधा तोला सुवर्ण की हनुमान्जी की प्रतिमा बनाकर, आचमन, प्राणायाम करता हुआ, हाथ में जल, पुष्प, अक्षत, द्रव्य आदि लेकर, 'अद्येत्यादि शुभतिथौ' से

शुद्ध्यर्थं पञ्चामृतस्नपनं कृत्वा, मूलमन्त्रेण शुद्धोदकस्नपनं कृत्वा, पञ्चप्रस्थपरिमित-श्वेत-तन्दुलोपरि अलङ्कृत-पूर्णकलशं संस्थाप्य, तदुपरि वस्त्रं निधाय, तदुपरि प्रतिमामाधाय, प्राण-प्रतिष्ठां कृत्वा, ततस्त्रयोदशकलशान् प्रतिमावेष्टितांस्तन्दुलेषु निधाय, कलशपूजनं कृत्वा, तेषु कलशेषु वस्त्राण्यावेष्ट्य, तेषु नानाविधफलानि दत्त्वा, सुवर्णानि कृत्वा-ऽऽञ्जनेयपूजार्थं कलश-पूजां कृत्वा, ततः पीठार्चनं कुर्यात् ।

पीठस्याऽधस्तलाधस्तलाय नमः । वितलाय नमः । सुतलाय नमः । रसातलाय नमः । तलाऽतलाय नमः । महातलाय नमः । पातालाय नमः । तत्राऽगाध-सर्वतोमुख-सुधाधिभ्यां नमः । तत्र कस्मैचित्कमठाय नमः । तदुपरि-सहस्रफणिफणामण्डित-मणि-प्रकाशिता-ऽशेषलोकशेषाय नमः । अष्टदिग्गजेभ्यो नमः । तदुपरि-भूमण्डलाय नमः । दिक्पालेभ्यो नमः । तन्मध्ये-मेरवे नमः । मेरोर्दक्षिणदिग्भागे कस्मैचिद्रत्नसानवे नमः । तन्मध्ये-सुरतरवे नमः । तन्मूले—सुवर्णवेदिकायै नमः । वेद्यां-वृक्षस्य पूर्व-भागे-नवरत्नखचित-नूतनपीठाय नमः । एवं सम्पूज्य,

---

आञ्जनेयप्रतिमापूजां करिष्ये' पर्यन्त पढ़कर, भूमि पर जल छोड़ दे। तदनन्तर उस सुवर्ण-प्रतिमा की शुद्धि के लिए पंचामृत स्नान कराकर, मूल मन्त्र द्वारा शुद्ध जल से स्नान कराता हुआ पाँच पसर चावल की ढेरी पर पूर्णपात्र सहित कलश स्थापित कर, उस कलश पर वस्त्र चढ़ाकर उस पर स्थापित सुवर्ण-प्रतिमा का प्राण-प्रतिष्ठा कर, पश्चात् चावल की तेरह ढेरी पर, तेरह कलश स्थापित कर उन-उन कलशों पर वस्त्र चढ़ाता हुआ अनेक प्रकार के फल आदि चढाकर, भलीभाँति पूजन करे।

स्वामिन् ! सर्वजगन्नाथ ! यावत् पूजावसानकम् ।
तावत् त्वं प्रीतिभावेन प्रतिमायां स्थिरो भव ॥

ततस्त्रयोदश-ग्रन्थियुक्त-दोरकं प्रतिष्ठाप्य,

ध्यानम्

वन्दे विद्युद्-वलयलसितं ब्रह्मसूत्रं दधानं
कर्णद्वन्द्वे कनकवलये कुण्डले धारयन्तम् ।
सत्कौपीनं कटिपरिहतं कामरूपं कपीन्द्रं
नित्यं ध्यायेदनिलतनयं वज्रदेहं वरिष्ठम् ॥ १ ॥

प्रतप्त - जाम्बूनद - दिव्यभासं
देदीप्यमाना - ऽग्नि - विभासुराक्षम् ।
प्रफुल्ल-पङ्केरुह - शोभनास्यं
ध्याये हृदिस्थं पवमानसूनुम् ॥ २ ॥

अथ कल्पोक्तप्रकारेण आवाहनादि-षोडशोपचारान् कृत्वा,

नमः सर्वहितार्थाय जगदाराध्यकर्मणे ।
अमेयायाऽञ्जनेयाय पुनरर्घ्यं पुरोऽर्पयेत् ॥ ३ ॥

---

तदनन्तर अंजनीनन्दन की पूजा के लिए कलश-पूजन कर पीठ पूजा करे ।

'तलाय नमः' से लेकर 'प्रतिमायां स्थिरो भव' पर्यन्त पढ़कर, तत्तत्स्थानों में अक्षत, पुष्प, चढ़ाकर 'स्वामिन् सर्वजगन्नाथ०' श्लोक पढ़कर तेरह ग्रन्थि वाले डोरे को प्रतिमा के साथ रख दे ।

उसके बाद 'वन्दे विद्युद्वलयलसितं०' से 'ध्याये हृदिस्थं पवमानसूनुम्' तक दो श्लोक पढ़कर ध्यान करे। उसके बाद आवाहन से लेकर षोडशोपचार से प्रतिमा एवं डोरे का पूजन कर 'नमः सर्वहितार्थाय०'

इति प्रसन्नाऽर्घ्यं समर्पयामि नमः ।

भक्त्या प्रकल्पितैरेतैरुपचारैश्च षोडशैः ।
भगवन् हनुमानीश ! प्रीयतां मे प्रियोक्तिभिः ॥ ४ ॥

उपचारसमर्पणम् ।

यस्य स्मृत्या च नामोक्त्या तपो-यज्ञ-क्रियादिषु ।
न्यूनं सम्पूर्णतां यातु सद्यो वन्दे तमच्युतम् ॥ ५ ॥

एवं रात्रौ प्रथम-यामपूजां कृत्वा, तस्यां रात्र्यां प्रतियाम-पूजां कुर्वन्, गीत-वादित्रादिभिर्मङ्गलध्वनिभिर्भागवत-पठनादि-पुराण-श्रवणादिभिर्जागरणं कृत्वा, परेद्युः प्रभाते महानद्यां ब्राह्मणैः सह स्नानं कृत्वा, नित्यकर्म विधाय, गन्धादिभिरलङ्कृत्य, गृह-मागत्य, पूर्ववत्पूजां कृत्वा, हनुमद्व्रतोद्यापनाङ्गहोमं कुर्यात् । क्षीरान्नेनाऽऽज्येन पिप्पलसमिद्भिः कल्पोक्तद्रव्येण मूलमन्त्रेणा-ऽष्टोत्तरसहस्रमष्टोत्तरशतं वा होमं कुर्यात् । पूर्णाहुतिं च दत्त्वा,

---

श्लोक पढ़कर, एक आचमनी जल छोड़कर, 'भक्त्या प्रकल्पितैः०' इस श्लोक से षोडशोपचार पूजन श्री हनुमान् जी को समर्पित करता हुआ 'यस्य स्मृत्या च नामोक्त्या० पढ़कर जल छोड़ दे ॥ १-५ ॥

इस प्रकार रात्रि के चारों प्रहर का पूजन करता हुआ, गाना-बजाना आदि मंगलध्वनि तथा भागवत-पारायण एवं पुराण-श्रवणआदि से रात भर जागरण कर दूसरे दिन प्रातःकाल वृणीत ब्राह्मणोंके साथ नदी में स्नान एवं नित्य कर्म कर, गन्धादि से उन ब्राह्मणों का सत्कार कर, पश्चात् सभी ब्राह्मण-मण्डली के साथ घर आकर, पूर्व की भाँति हनुमान्जी का षोडशोपचार से भली-भाँति पूजन कर, हनुमद्-व्रत-उद्यापन निमित्त हवन करे । खीर, घृत, पीपल की समिधा तथा अन्य हवनीय सामग्री द्वारा मूल मन्त्र से एक हजार आठ अथवा एक सौ आठ

ब्रह्मणे दक्षिणां दत्त्वा, तत आचार्यं पूजयित्वा, प्रतिमां स-वस्त्रां सालङ्कारां स-तन्दुलां च दत्त्वा, तद्दान-साद्गुण्यार्थं दक्षिणां दत्त्वा, आचार्याय स-वत्सां सालङ्कारां पयस्विनीं गां दद्यात् ।

तत ऋत्विग्भ्यः स-वस्त्रान् कलशान् दत्त्वा, दक्षिणां च दत्त्वा, विशिष्ट-पङ्गु-दीनान्ध-कृपणजनान् ब्राह्मणान् सन्तर्प्य, ऋत्विगादिब्राह्मणाञ्छतं, पञ्चाशत्, पञ्चविंशतिं त्रयोदश वा ब्राह्मणान् मिष्टान्न-भोजनेन सन्तर्प्य, भूरिदानं विभवानुसारेण कुर्यात् । एवं कुर्वन् यजमानः कृतार्थो भवति । हनुमान् सुप्रीतो वरदो भूत्वा, पुत्र-पौत्रादि-सर्वकामान् प्रयच्छति । इति शौनकादिकान् प्रति सूतः प्रोवाच ।

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रि-विरचिते हनुमद्-रहस्ये हनुमद्-व्रतोद्यापनविधिः समाप्तः ।

---

बार हवन एवं पूर्णाहुतिकर, ब्राह्मणों को दक्षिणा प्रदान करे। तत्पश्चात आचार्य का भली-भाँति पूजन करे, वस्त्र, अलकार, तन्दुल सहित सुवर्ण - प्रतिमा प्रदान कर उसकी सांगता दक्षिणा देकर, बछड़ा सहित अलंकृत दूध वाली गौ प्रदान करे।

तत्पश्चात् उन वृणीत तेरह ऋत्विजों को भी वस्त्र एवं कलश तथा दक्षिणा देकर, पगु ( अपाहिज ), दीन, अन्ध, कृपण तथा ब्राह्मणों को भली-भाँति मिष्टान्न आदि से अपने वैभव के अनुसार कम से कम सौ, पचास, पचीस अथवा तेरह ब्राह्मणों को भोजन करावे। इस प्रकार यदि यजमान विधि-विधान से हनुमान्जी का व्रत करता है तो वह कृतकृत्य होता है अर्थात् वह हनुमान्जी के द्वारा वर एवं उनकी प्रसन्नता प्राप्त कर, पुत्र-पौत्र आदि समस्त अभीष्ट सिद्धि को प्राप्त करता है। इस प्रकार सूतजी ने शौनकादि ऋषियों से कहा।

इस प्रकार पण्डित-श्रीशिवदत्तमिश्रशास्त्रिकृत 'शिवदत्ती' हिन्दी व्याख्या सहित हनुमद्-रहस्य में हनुमद्-व्रतोद्यापन-विधि समाप्त।

# हनुमद्-व्रत-कथा

मुनयो जाह्नवीतीरे शौनकाद्या द्विजोत्तमाः ।
प्रणम्य जगतां नाथं रमानाथं मुहुर्मुहुः ॥ १ ॥
सूतं पुराणवक्तारं महाभागवतोत्तमम् ।
दृष्ट्वा प्राञ्जलयः सर्वे प्रोचुर्व्रतपरायणाः ॥ २ ॥

ऋषय ऊचुः

वासुदेवकथाप्रश्ने व्रतानि बहुशस्त्वया ।
प्रोक्तानि कृपयाऽस्माकं व्रतमन्यत् वदस्व नः ॥ ३ ॥

सूत उवाच

शृणुध्वमृषयः सर्वे मत्तः परतरं व्रतम् ।
चतुर्णामपि वर्णानां कर्तव्यं पावनोत्तमम् ॥ ४ ॥
गुह्याद् गुह्यतमं लोके मङ्गलानां च मङ्गलम् ।
आयुरारोग्यफलदं पुत्र - पौत्र - फलप्रदम् ॥ ५ ॥

---

कथा—एक समय परम पुनीत गंगा तट पर श्रेष्ठ शौनकादि ऋषियों ने संसार के स्वामी रमानाथ को बारम्बार प्रणाम करते हुए, परम भगवद्भक्त पुराणप्रवक्ता सूतजी को देखकर, व्रत में तत्पर समस्त ऋषिगणोंने हाथ जोड़कर सूतजी से इस प्रकार कहा—॥१-२॥

हे सूतजी ! आपने वासुदेव-कथा के प्रसंग में अनेक व्रत विधि-विधान से बताया। अब हम सभी पर कृपापूर्ण दृष्टि रखते हुए किसी अन्य व्रत का विधान बताइए ? ॥ ३ ॥

सूतजी ने कहा—मैं अब सर्वश्रेष्ठ, अतिपवित्र, चारों वर्णों (ब्राह्मण, क्षत्रिय, वैश्य, शूद्र) के करने योग्य व्रत का विधान बताता हूँ, जिसे आप लोग अत्यन्त सावधान पूर्वक श्रवण करें॥४॥ यह व्रत परम मांगलिक एवं इस संसार में अति गुप्त, आयु,'आरोग्य, ऐश्वर्यादि तथा पुत्र-पौत्रादि को

सम्पत्करं प्रतिदिनं विद्याप्रदमनुत्तमम् ।
कदाचिद् भगवान् व्यासः सह शिष्यैर्दयानिधिः ॥ ६ ॥
युधिष्ठिरं द्वैतवने द्रष्टुमभ्यागतो हठात् ।
निर्वैरं मृगसङ्कीर्णं सुपुष्पफलवृक्षकम् ॥ ७ ॥
स-पञ्चमपि काकीण - स-षड्जशिखि-सङ्कुलम् ।
श्रुता - ऽध्ययन - सम्पन्नैर्यज्वभिर्बहुवेदिभिः ॥ ८ ॥
पुत्र - पौत्रैः परिवृतैः कलितं ललितं ततम् ।
शस्त्रव्याख्यान - चतुरैर्वेदघोषोपशोभितम् ॥ ९ ॥
महाभागवतोद्गीतं लीलाहरिकथाश्रयम् ।
नित्यान्नदाननिलयं स्तुत्यं सर्वाश्रमेषु च ॥१०॥

---

भी प्रदान करने वाला,प्रतिदिन समस्त सम्पत्तिप्रदायक तथा उत्तम विद्यादायक है। किसी समय अपने शिष्यों के साथ दयासागर भगवान् व्यासजी द्वैतवन में एकाएकी युधिष्ठिरको देखने के लिए आ पहुँचे ॥ ५-६½ ॥ उस वन में परस्परविरोधी पशु, पक्षी आदि भी आपसी विरोध का परित्याग कर दिये थे तथा मृगों से व्याप्त सुन्दर पुष्प फल युक्त वृक्ष एवं कोयल के सुमधुर शब्द तथा नृत्य और षड्ज स्वर में अत्यन्त प्रसन्नता से शब्द करते हुए मयूरगणों को तथा अनेक वेदियों में हवन करते हुए. वेदशास्त्रज्ञ ऋषिगणों को व्यासजी ने देखा ॥ ६½-८ ॥ कहीं-कहीं पुत्र-पौत्रादि से घिरे हुए भली-भाँति शास्त्रचर्चा, वेदघोष, महाभागवतोक्त हरिलीलाएँ, तो कहीं-कहीं निरन्तर अन्नदान करते हुए देखा। जो कि चारों आश्रमों ( ब्रह्मचर्य, गृहस्थ, वानप्रस्थ, संन्यस्त ) के लिए अत्यन्त स्तुत्य है ॥ ९-१० ॥

सानुजं स-कलत्रं च तत्राऽपश्यद् युधिष्ठिरम् ।
कृष्णद्वैपायनं सोऽपि श्रुत्वाभ्यागतमादरात् ॥११॥
अतिदूरं च निष्क्रम्य पुरस्कृत्य सहाऽनुजैः ।
एकान्तसदनं नीत्वा निविष्टं पर्यपूजयत् ॥१२॥
द्रौपदी-रचितां पूजामुररीकृत्य स द्विजैः ।
सादरं कुशलं धर्मं पप्रच्छेन्द्रं यथा गुरुः ॥१३॥

वेदव्यास उवाच

भद्रं खलु महाराज ! कुशलं खलु पार्थिव ! ।
आस्ते खलु महावीरः सुखमेव वृकोदरः ॥१४॥
धनञ्जयः सुखी चैव यमौ च सुखिनावुभौ ।
सम्पादितं पाशुपतं दिव्यमस्त्रं किरीटिना ॥१५॥

---

उस समय कृष्णद्वैपायन युधिष्ठिर को अपने भाई एवं पत्नीसहित व्यासजीने देखा। जिस समय युधिष्ठिरने भगवान् वेदव्यास का आगमन सुना, उस समय, उस स्थानसे दूर जाकर अपने भाइयोंके साथ एकान्त, गृह में व्यासजी को ले जाकर अत्यन्त आदरपूर्वक सिंहासन पर बैठाते हुए पूजन किया ॥११-१२॥ उस समय भगवान् वेदव्यासजी ने द्रौपदी द्वारा पूजा को स्वीकार कर, जिस प्रकार इन्द्र से सादर कुशलता का समाचार बृहस्पतिने पूछा था, उसी प्रकार ब्राह्मणोंसे घिरे हुए,धर्मराज युधिष्ठिर का कुशल-समाचार अत्यन्त आदर के साथ पूछा ॥१३॥

व्यासजीने कहा—हे महाराज पृथुपुत्र युधिष्ठिर जी ! आप तथा महाबली वृकोदर ( भीम ) एवं धनंजय ( अर्जुन ) और दोनों जुड़वाँ भाई ( नकुल, सहदेव ) कुशल पूर्वक तो हैं ? और क्या अर्जुनने दिव्य पाशुपतास्त्र प्राप्त किया ? ॥ १४-१५ ॥ हे महाराज ! सम्पत्ति का

अन्यद् गुह्याद् गुह्यतमं वदतः शृणु तन्मम ।
अस्ति व्रतं महाराज ! केवलं सम्पदालयम् ।
कृते चाऽस्मिन् व्रते शीघ्रं भवद्-राज्यागमो भवेत् ॥१६॥

धर्मपुत्र उवाच

किं नाम व्रतमाहात्म्यमैश्वर्यं तस्य कीदृशम् ? ।
देवता तत्र का प्रोक्ता को विधिः पूजनं कथम् ? ॥१७॥
कस्मिन् मासे च कैः पूर्वं व्रतमाचरितं प्रभो ! ? ।
इदानीमेव तत्कुर्यां यदि शीघ्रफलप्रदम् ॥१८॥
इत्थं त्वयाऽतिदुःखार्ते कृपा चेन्मयि सानुजे ।
भवादृशानां महतां बान्धवो नाऽपरः क्वचित् ॥१९॥
युधिष्ठिरेण स मुनिः स्व-विश्वासमुदीरितः ।
प्रत्युवाच स्मरंश्चित्ते हनुमन्तं मुहुर्मुहुः ॥२०॥

---

निधिस्वरूप अत्यन्त गुप्त एक व्रत का मैं निरूपण करता हूँ, जिसे आप सावधान-पुरस्सर सुनिए। इस व्रत को करने पर निश्चित ही नष्ट राज्य शीघ्र प्राप्त होता है ॥१६॥

युधिष्ठिरने कहा कि हे प्रभो ! इस व्रतका नाम, माहात्म्य, ऐश्वर्य, देवता एव विधि तथा पूजन किस प्रकार किया जाता है तथा किस मास में यह व्रत करना चाहिए, यह बताने की कृपा कीजिए, साथ-ही-साथ यह भी निरूपण कीजिए कि इस व्रत को पूर्व में किसने किया था ? यदि आपके कथनानुसार यह व्रत शीघ्र फलदायक है, तो क्या मैं इसी समय इस व्रत को करूँ ? कारण कि भाई सहित मैं अत्यन्त दुःखी हूँ, अतः आपकी मुझ पर विशेष अनुकम्पा है, और आप-जैसा हितचिन्तक मेरा और कोई नहीं है। इस प्रकार युधिष्ठिरने अत्यन्त विश्वासपूर्वक भगवान् वेदव्यासजी से कहा। तत्पश्चात् अपने चित्त में श्री हनुमान्जी

व्यास उवाच

शृणु राजेन्द्र ! तन्नाम हनुमद्-व्रतमद्भुतम् ।
उच्चारणादेव तस्य कार्यसिद्धिर्न संशयः ॥२१॥
दुष्टग्रहोच्चाटनं च महाज्वरनिवारणम् ।
अलं हि बहुभिर्वाक्यैरभीष्टदमिति स्मृतम् ॥२२॥
पुरा हि भगवान् कृष्णः पाञ्चाल्या प्रार्थितो भृशम् ।
आचचक्षे व्रतमिदं सविशेषं हनूमतः ॥२३॥
तत्प्रभावादेव लब्धास्त्वया परमसम्पदः ।
कदाचिदपि पाञ्चाल्याः कण्ठस्थं व्रतदोरकम् ॥२४॥
दृष्ट्वा धनञ्जयः प्राह किमेतद्-व्रतमित्यलम् ।
साऽऽचचक्षे सुमधुरं व्रतागमनमुत्तमम् ॥२५॥

---

का बारम्बार स्मरण करते हुए व्यासजी ने इस प्रकार कहा-॥१७-२०॥
हे राजेन्द्र युधिष्ठिर ! अत्यन्तप्रभावशाली यह हनुमद्-व्रत है, जिसका नाम-स्मरण से हो निःसन्देह समस्त कार्य सिद्ध होते हैं। तथा दुष्ट ग्रह विनाशक एवं ज्वरादि को नष्ट करने वाला यह व्रत है। इसके विषय में बहुत कुछ कहना तो व्यर्थ ही है। आप इतना ही समझ लीजिए कि यह व्रत समस्त अभीष्ट कार्य को सिद्ध करने वाला है॥२१-२२॥ पूर्व समय में पांचाली द्रौपदी द्वारा अत्यन्त प्रार्थना करने पर इस हनुमद्-व्रत का निरूपण भगवान् कृष्ण ने किया था ॥२३॥ उसी व्रत के प्रभाव से तुमने समस्त सम्पत्तियाँ प्राप्त की थीं। किसी समय हनुमद्-व्रत के डोरे को द्रौपदी के कण्ठ में देखकर धनंजय ने कहा कि व्यर्थ (बेकार) को डोरा गले में क्यों बाँध रखा है? तत्पश्चात् द्रौपदी ने मधुर बचनों से हनुमद्-व्रत का यह उत्तम डोरा मैंने बाँध रखा है, इस प्रकार कहा ॥२४-२५॥

श्रुत्वैतद् दैववशगः पार्थः क्रोधसमागतः ।
प्राह वै परुषं वाक्यं सोच्चैश्वर्यातिगर्वितः ॥२६॥
ध्वजे मम निबद्धोऽयं वानरो नियतं मया ।
किं दास्यति मम ब्रूहि वटुर्वन्याशनो मृगः ॥२७॥
तिर्यग्-जन्मपराधीनो योषितो बुद्धिरीदृशी ।
एतादृशैर्व्रतैरस्मान्न वञ्चयितुमर्हसि ॥२८॥
इत्युक्ता साऽतिदुःखार्ता प्राह तथ्यं धनञ्जयम् ।
भो राजन् ! सुकुमारेण आख्यातं मम सुप्रियम् ॥२९॥
जगन्नाथेन कृष्णेन तथा तस्मान् मया धृतम् ।

अर्जुन उवाच

दुःशीले छद्मना तुभ्यं तेन हास्यात् समीरितम् ॥३०॥

---

इस प्रकार द्रौपदी के वाक्य को सुनकर दैववशात् अपने ऐश्वर्याभिमान में चूर, अत्यन्त क्रुद्ध होते हुए अर्जुनने अति कठोर वाक्य द्रौपदी से श्री हनुमान्जी के विषय में कहा कि अरे ! यह बन्दर तो निरन्तर हमारे रथ की ध्वजा पर लटका हुआ है। यह तुम्हीं बतओ कि शाखामृग, जंगली फलों को खानेवाला, वानर समस्त सम्पत्ति प्रदान करा सकता है ? कारण कि स्त्रियों की बुद्धि तो वानर आदि तिर्यग्योनियों के अधीन है। अतः तुम इस प्रकार के व्रतों से मुझे ठग नहीं सकती। इस प्रकार अर्जुन के कहने पर अत्यन्त दुःखी होती हुई द्रौपदी ने पुनः अर्जुन से सच्ची बातें इस प्रकार कही कि हे राजन् ! इस व्रत का विधान मुझसे जगन्नाथ भगवान् कृष्ण ने बताया था। उनके कथनानुसार ही मैंने इस डोरे को धारण किया। इस प्रकार द्रौपदी के वाक्य को सुनकर अर्जुन ने कहा— अरी दुष्टे ! उस कपटी कृष्ण ने तुमको ठग लिया और हँसी-मजाक में तुमसे इस प्रकार व्रत एवं डोरा बाँधने के लिए कहा ॥२६-३०॥ मेरे

मन्निबद्धस्य तस्यैव मदधीनस्य दासवत् ।
पूजा तेन कथं प्रोक्ता दुष्टचित्तेन विष्णुना ॥३१॥
पतिव्रता न च त्वं वै पतिवाक्यपरायणा ।
त्याज्यं तद्दोरकं ते तु व्रताङ्गव्रतमप्युत ॥३२॥
इतीरितेयं सन्त्रस्ता पतित्वात् पतिदेवता ।
त्यक्त्वा तु दोरकं तत्र न्यस्तं चोद्यानमध्यमे ॥३३॥
ततः सकलसम्पत्तिर्यथागतमगात्तदा ।
भवद्भिरीदृशं प्राप्तमायासाद् वनसेवनम् ॥३४॥
त्रयोदशग्रन्थियुक्त-दोरस्योल्लङ्घनेन वै ।
भोक्तव्यं तत्फलं सौख्यं वत्सरैश्च त्रयोदशैः ।

---

द्वारा ही अधीन वह कृष्ण सेवक के समान है, तो भला अत्यन्त दुष्ट कृष्ण ने हनुमान्‌जी की पूजा करने के लिए तुमसे किस प्रकार कहा ? तुम तो अति पतिव्रता, सतीसाध्वी हो, अतः तुम्हारे लिए पति के वाक्य का परित्याग करना उचित नहीं, एतदर्थ इस हनुमद्-व्रत के अंगभूत धारण किये हुए इस डोरे का तुम अति शीघ्र परित्याग कर दो। इस प्रकार पतिदेव अर्जुन के कहने पर भयभीत होती हुई द्रौपदी ने उस डोरे को कण्ठ से उतार कर फेंक तो नहीं दिया, अपितु बगीचे के मध्य सुरक्षित रख दिया ॥ ३१-३३ ॥

हे युधिष्ठिर ! इस प्रकार अर्जुन द्वारा आज्ञा प्राप्त होने से उस डोरे को अपने कण्ठ से निकाल देने के कारण ही आपने अनायास वनवास प्राप्त किया और आपकी समस्त सम्पत्ति जिस प्रकार एकाएकी प्राप्त हुई थी उसी प्रकार सहसा नष्ट हुई ॥३४॥ तेरह ग्रन्थियुक्त इस डोरे का अपमान करने से ही तेरह वर्ष पर्यन्त वनवास भुगतना पड़ा। यदि इसे

इत्येतन्न् सकलं श्रुत्वा कृष्णा सस्मार तद्व्रतम् ॥३५॥
सत्यमित्याह सर्वेषां पतीनां पुरतस्तदा ।

व्यास उवाच

अपरं श्रोतुमिच्छामि चेतिहासं वदामि ते ।
पुरा हि राघवः सीतां द्रष्टुकामः स-लक्ष्मणः ॥३६॥
ऋष्यमूकमुपागम्य हनुमन्तं ददर्श ह ।
स-सुग्रीवेण तेनाऽसौ रामः सख्यं चकार ह ॥३७॥

हनुमान् उवाच

राम राम महाबाहो ! यद् वक्ष्ये शृणु तद्वचः ।
भक्तस्य तत्र मे राम कार्यातुरवशेरितः ॥३८॥
अहं पुरा मघवता वज्रेण हनुताडितः ।

---

धारण किये होते तो तेरह वर्ष पर्यन्त अवश्यमेव सुख का उपभोग करते। इस प्रकार व्यास जी की बात सुनकर द्रौपदी को उस व्रत का स्मरण हो आया और उस समय अपने पाँचों पतियों के आगे द्रौपदी ने कहा कि भगवान् व्यासजी ने उक्त बात सत्य ही कही ॥३५½। पुनः व्यासजी ने कहा—हे युधिष्ठिर ! इस हनुमद्-व्रत-विषयक कथा श्रवण करने की तुम्हारी इच्छा हो तो मैं और भी एक इतिहास कहता हूँ उसे सावधान पूर्वक श्रवण करो। एक समय लक्ष्मण के साथ मर्यादा पुरुषोत्तम भगवान् रामचन्द्र सीता की खोज करते हुए जिस समय ऋष्यमूक पर्वत पर आये, उस समय वानरराज सुग्रीव के साथ हनुमान् को देखा। और राम के साथ हनुमान् ने मित्रता की ॥३५½-३७।

हनुमानजी ने कहा—हे महाबाहु राम ! मैं जो बात कहूँगा उसे आप सावधान पूर्वक श्रवण करें, क्योंकि वास्तविक में तो मैं आपके कार्य करने में अत्यन्त आतुर एवं परम भक्त हूँ। किसी समय देवराज इन्द्र ने मेरी

तदाप्रभृति हनुमानिति ख्यातोऽस्मि भूतले।
तदा मां मूर्च्छितं दृष्ट्वा पिता मे वायुरब्रवीत् ॥३९॥
यतो निपातितः पुत्र इति क्रुद्धस्तिरोदधे।
तदा ब्रह्मादयो देवा साक्षाद् भूत्वा वदन्ति ह।
आञ्जनेय ! चिरञ्जीव त्वममेय-पराक्रमः ॥४०॥
अशेष - रामकार्याणि साधय त्वं कपीश्वर !।
वायुपुत्र ! प्लवङ्गेश ! हनुमद्व्रत-नायकम् ॥४१॥
तद्यश्चकार विमलं भृशं प्रियतमोऽद्भुतम्।
तस्य सर्वाणि कार्याणि सिध्यन्तीति वरं ददुः ॥ ४२ ॥
कार्यार्थिना राघवेण कृतमित्यब्रवीच्च माम्।
स्मृतं तद् वै राम-वाक्यं कुरु स्वामिन् मयेरितम् ॥४३॥

---

हनु ( दाढ़ी ) पर वज्र-प्रहार किया, तभी से तो लोक में मैं 'हनुमान्' इस नाम से प्रसिद्ध हुआ। जिस समय मैं इन्द्र के वज्र-प्रहार से मूर्च्छित हुआ था, उस समय मेरे पिता वायु मुझे मूर्च्छित देखकर इस प्रकार कहने लगे कि, 'जिसने मेरे पुत्र को मारा है, उसे मैं भी अवश्य नष्ट करूँगा।' इस प्रकार क्रुद्ध होते हुए अन्तर्ध्यान हो गये। उस समय समस्त ब्रह्मादि देवगण उस स्थान पर प्रकट होकर इस प्रकार कहने लगे कि हे अंजनिनन्दन ! तुम अमित पराक्रमी बनो और इस वज्र का प्रहार व्यर्थ हो, तथा चिरंजीव हो और हे कपीश्वर वानरराज ! वायुपुत्र ! तुम अपने व्रत के आज से नायक होते हुए राम के समस्त कार्य को सिद्ध करो ॥३८-४१॥ और उन समस्त देवगणों ने इस प्रकार वरदान भी दिया कि तुम्हारे इस पुनीत व्रत को जो करेगा उसके समस्त मनोरथ निश्चय ही सिद्ध होंगे। और भी कहा कि इस व्रत को कार्यार्थी राघव ने भी

न मन्तव्यं वृथा नाथ ! सत्यं मन्तव्यमीश्वर ! ।
रोचते यदि त्वच्चित्ते तत्कुरुष्वार्थसिद्धये ॥४४॥
इत्युक्त्वा संस्थिते तस्मिन् तदा सङ्क्रमते हठात् ।
आकाशवाणी तत्रोच्चैर्यदुक्तं सत्यमेव तत् ॥४५॥
इति रामः प्रसन्नश्च श्रुत्वा गगनभाषितम् ।
चिकीर्षया व्रतस्याऽस्य हनुमन्तमथाऽब्रवीत् ।४६॥
हनुमन् ! को विधिस्तस्य कदा कर्तव्यमेव तत् ? ।
ब्रूहीति वचनं श्रुत्वा प्रत्युवाच मरुत्सुतः ॥४७॥
मार्गशीर्षे सिते पक्षे त्रयोदश्यां जयप्रदे ।
अभिजिन्निकटे काले त्रयोदशघटीयुते ।४८॥
त्रयोदशग्रन्थियुतं दोरकं कलशे स्थितम् ।
हरिद्राभं ततस्तत्र मामावाह्य प्रपूजयेत् ॥४९॥

---

किया था। अतः हे स्वामी ! देवताओं ने मुझसे ही कहा है कि तुम राम के समस्त कार्य सिद्ध करो। हे नाथ ! इस व्रत को आप व्यर्थ न समझें, अपितु सत्य ही मानें। हे प्रभु ! यदि आपके मनमें अपनी कार्य-सिद्धि अभीष्ट हो तो आप इस व्रत को अवश्य कीजिए। हनुमान्‌जीके इस प्रकार कहने के पश्चात् उच्च स्वर से आकाशवाणी हुई कि 'हनुमान् जी ने जो भी कहा वह सत्य है।' ऐसी आकाशवाणी सुन भगवान् राम ने अत्यन्त प्रसन्न हो इस व्रत को करने की इच्छा से पुनः हनुमान् जी से इस प्रकारकहा ॥४२-४६॥ हे हनूमान् ! इस व्रत का विधान तथा किस समय इस व्रतको करना चाहिए इसे बताने की कृपा करें। भगवान् राम के उपर्युक्त वचन को सुनकर मारुतिनन्दन हनुमान् ने इस प्रकार कहा ॥४७॥ मार्गशीर्ष ( अगहन ) शुक्लपक्ष त्रयोदशी यदि तेरह घड़ी युक्त हो तथा शुभकारी अभिजित् नक्षत्र भी हो, तो उस दिन तेरह गाँठ

पीतगन्धं पीतपुष्पं पीतद्रव्यं विशेषतः ।
'नमो भगवते वायुनन्दनाये'ति मन्त्रतः ॥ ५० ॥
ॐकारेणाऽनेन पूजां कुर्यात् षोडशयत्नतः ।
सोपचारं ब्राह्मणाय दद्याद् वायनमुत्तमम् ॥ ५१ ॥
त्रयोदशाऽपूपमात्रं गोधूमान्नं प्रदापयेत् ।
स-दक्षिणं स-ताम्बूलं ब्राह्मणान् भोजयेत् तदा ॥ ५२ ॥
प्रारम्भे त्वस्य कार्याणि सिद्धयन्त्येव न संशयः ।
तावत् कर्तव्यमेतद् वै यत्नतश्च त्रयोदश ॥ ५३ ॥
उद्यापनं यथान्यायं कुर्यात् कलशवस्त्रकैः ।
सम्पूर्णमपि चेत्युक्तमित्युक्त्वा विरराम ह ॥ ५४ ॥
रामोऽपि सह सुग्रीवः सानुजस्तच्चकार ह ।
कार्यसिद्धिरभूत्तस्य सुग्रीवश्च विभीषणः ॥ ५५ ॥

---

युक्त पीले डोरे को कलश में रखकर 'ॐ नमो भगवते वायुनन्दनाय' इस मन्त्रसे आवाहन कर, पीले गन्ध, पुष्प एवं अन्यान्य पूजन सामग्री से मेरा पूजन करे ॥४८-५०॥

साधक को चाहिए कि ॐकार पूर्वक मन्त्र द्वारा षोडशोपचार से पूजन करे। गेहूँ के आटे का तथा तेरह मालपूआ, ताम्बूल और दक्षिणा सहित वायन ( छितनी ) में रखकर ब्राह्मण को दे, एवं यथेष्ट भोजन भी करावे ॥५१-५२॥ हनुमद्-व्रत के आरम्भ में इस प्रकार करने से निःसन्देह साधक के समस्त कार्य सिद्ध होते हैं। जब तक तेरह वर्ष पूर्ण न हो तबतक इस व्रतको प्रयत्नपूर्वक करे। तेरह वर्ष के बाद कलश, वस्त्रआदि द्वारा विधि-विधान से इस व्रत के उद्यापन करने से यह व्रत पूर्ण होता है। इस प्रकार हनुमान् जी ने भगवान् रामचन्द्र से कहा ॥५३-५४॥ लक्ष्मण, विभीषण एवं सुग्रीव के साथ राम ने भी इस

विभीषणादि-रामोक्तं व्रतं कृत्वा यथोदितम् ।
तदाप्रभृति लोकेऽस्मिन् विश्रुतं हनुमद्व्रतम् ॥ ५६ ॥
भवेत् सहायो हनुमान् कृते तस्य व्रते शुभे ।
तस्मात् त्वयाऽपि कर्त्तव्यं व्रतमेतन्नृपोत्तम ! ॥ ५७ ॥
मासानां मार्गशीर्षोऽहमित्युक्तं स्वामिना स्वयम् ।
तस्मात्त्वमपि तत्कृत्वा लब्धराज्यो भविष्यसि ॥ ५८ ॥
इत्याकर्ण्य वचस्तस्य सर्वेऽपि मुदमाययुः ।
अथ सायमभूत्तत्र सूर्ये [1]वाराशिमागते ॥ ५९ ॥
नीत्वा रात्रिं ततः प्रात उत्थाय तपसः सुतः ।
व्यासस्य पुरतश्चक्रे व्रतमेतत् सुविस्तरम् ॥ ६० ॥

व्रतको किया, जिससे उनसभी की कार्य-सिद्धि हुई॥५५॥ जबसे विभीषण और राम आदिने इस व्रत को किया तभी से इस लोक में इस व्रत का प्रचार हुआ ॥५६॥ हे युधिष्ठिर ! इस व्रत के करने वाले प्राणी की सहायता हनुमान्‌जी स्वयं करते हैं। अतः यह व्रत तुम्हें भी अवश्य करना चाहिए ॥५७॥ भगवान् ने गीता में 'मासानां मार्गशीर्षोऽहं' कहकर इस मासकी विशिष्टता स्वयं प्रकट की है, अतः इसी मास में यदि तुम भी व्रत को करो तो निश्चित ही नष्ट राज्य तुम्हें पुनः प्राप्त हो जायेगा॥५८॥
इस प्रकार व्यासजी के वाक्य को सुनकर युधिष्ठिर आदि समस्त ऋषिगण अतीव हर्षित हुए। तत्पश्चात् सभी लोगों ने समुद्र तट पर सायं-काल में पहुँचकर वहाँ रात्रि व्यतीत की। उसके बाद प्रातःकाल उठकर धर्मराजपुत्र युधिष्ठिरने व्यासजी के समक्ष यह व्रत तथा पायस, घृतयुक्त

१. वाराशि = जलराशि, समुद्रमित्यर्थः ।

उद्यापनं तथा होमः स-घृतं पायसैः शुभैः ।
मूलमन्त्रोक्तसूक्तेन व्रताङ्गमकरोत्ततः ॥ ६१ ॥
साक्षाद्धनुमतः पूजा पाञ्चाल्या सह कल्पिता ।
अथ संवत्सरेऽतीते पाण्डवो राज्यमाययौ ॥ ६२ ॥
तस्मात् कुरुध्वं मुनयो व्रतानामुत्तमं व्रतम् ।
इति कृत्वा भवन्तश्च प्राप्ताभीष्टमनोरथाः ॥ ६३ ॥
तेऽपि चक्रुर्यथान्यायं व्रतमेतत् सुमङ्गलम् ।
इति श्रीहनुमत्कल्पं लिखितं यस्य वेश्मनि ॥ ६४ ॥
कृते व्रते च यत्पुण्यं तत्पुण्यं फलमश्नुते ।
पठते यो हनुमतः कल्पं यः शृणुयान्नरः ॥ ६५ ॥
वाचयेद् यस्तु सद्भक्त्या स सम्पूर्णमनोरथः ।

---

हवि आदि से होम करते हुए मूलमन्त्र 'ॐ नमो भगवते वायुनन्दनाय' द्वारा व्रत के अंगभूत हनुमान्‌जी का पूजन एवं उद्यापन, द्रौपदी के साथ किया। इस प्रकार इस व्रत के करने से वर्ष के भीतर ही युधिष्ठिर ने अपना राज्य पुनः प्राप्त किया ॥५९-६२॥ हे ऋषिगण! आपसभी इस उत्तमव्रतको करें। जिस व्रत को करने से आप सभी के अभीष्ट-मनोरथ सिद्ध होंगे। पश्चात् उन महर्षियों ने भी विधि-विधान से परम मांगलिक इस हनुमद्व्रत को किया।

हे ऋषिगण! जिसके घर में यह हनुमत्कल्प ग्रन्थ रहता है, उसको वही समस्त पुण्य फल प्राप्त होता है, जो कि इस व्रत को करने वाले पुण्यफल प्राप्त करते हैं। जो इस हनुमत्कल्प का पाठ करता है तथा श्रवण करता है या अत्यन्त श्रद्धा-भक्ति पूर्वक सुनाता है, उन सभी के समस्त मनोरथ पूर्ण होते हैं ॥ ६३–६५½ ॥

फलश्रुतिः

वेदविद् ब्राह्मणः श्रीमान् क्षत्रियोऽमितविक्रमः ॥ ६६ ॥
वैश्योऽपि च धनाध्यक्षः शूद्रः कृषिमहाधनः ।
रोगार्तो मुच्यते रोगात् सुतार्थी लभते सुतान् ॥ ६७ ॥
मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।
इदं व्रतं नरः कृत्वा साङ्गोपाङ्गं हनूमतः ॥ ६८ ॥
'ॐ नमो भगवते वायुनन्दनाये'ति मन्त्रतः ॥ ६९ ॥
अभिमन्त्र्य त्रिवारं यो गन्धं हस्तन लेपयेत् ।
ललाटे धारयेद् यस्तु तस्य लोको वशी भवेत् ॥ ७० ॥
धृत्वा ललाटे तिलकं यो राजगृहमन्वगात् ।
नृपतिस्तस्य वशगः प्रत्यहं जायते ध्रुवम् ॥ ७१ ॥
हनूमन्तं स्मरन् नाम प्रयाणं यदि गच्छति ।

---

फलश्रुति - इस व्रत को करने वाले ब्राह्मण वेदज्ञ, क्षत्रिय श्रीमान् तथा अतुल पराक्रमी, वैश्य कुबेर के समान धनवान् एवं शूद्र बहुत बड़ा धनी एवं खेती वाला होता है। उसी प्रकार रोग पीड़ित प्राणी रोग से मुक्त होता है, तथा पुत्रार्थी पुत्र प्राप्त करता है और मोक्षार्थी मोक्ष एवं धनार्थी धन को प्राप्त करता है। सांगोपांग हनुमान् का पूजन कर, 'ॐ नमो भगवते वायुनन्दनाय' इस मन्त्र से तीन बार अभिमन्त्रित गन्ध को हाथसे जो मनुष्य अपने मस्तकपर लगाता है उस मनुष्य के वश में सभी लोग हो जाते हैं ॥६५½-७०॥

जो मनुष्य इस प्रकार अपने ललाट में तिलक लगाकर राजगृह में जाता है उसको देखकर राजा उसके वशमें अवश्य हो जाता है ॥७१॥ इसी प्रकार जो व्यक्ति घरसे निकलते समय हनुमान्‌जी का स्मरण कर

सर्वत्र विजयी भूत्वा पुनरागच्छति ध्रुवम् ॥७२॥
हनुमत्-कल्पमेतत् तु भक्तियुक्तः करोति यः ।
राजद्वारे च युद्धे च सभायां व्यावहारिके ॥७३॥
हुताशने च पवने व्याघ्र-सिंह-भयेषु च ।
समस्तकार्योद्योगे च सर्वत्र विजयी भवेत् ॥७४॥
त्रयोदशग्रन्थियुक्तं व्रतदोरं हनूमतः ।
धारयेद् यः कण्ठमूले दक्षिणेऽप्यथवा करे ।७५॥
तस्य सर्वाऽभीष्टसिद्धिर्भवत्येव न संशयः ।
ब्राह्मण-क्षत्रिय-विशां शूद्रादीनां च सर्वशः ॥७६॥
व्रतं सम्पत्करं शीघ्रं स्त्रीणां चैव विशेषतः ।
सत्यं सत्यं पुनः सत्य व्रतमेतद् विधानतः ॥७७॥

नमस्ते नमस्ते महावायुसूनो !
नमस्ते नमस्ते भविष्यद् विधातः ।

---

जाता है वह निश्चय ही विजय प्राप्त कर पुनः लौट आता है ॥७२॥ जो इस हनुमत्-कल्प का श्रद्धा-भक्ति से पाठ करता है वह राजद्वार, युद्ध, सभा, व्यवहार, अग्नि, आँधी, व्याघ्र तथा सिंह आदि के भय एवं समस्त कार्य और उद्योग में विजयी होता है ॥७३-७४॥ तेरह गाँठ वाले हनुमद्व्रत के डोरे को कण्ठ अथवा दाहिने हाथ में जो मनुष्य धारण करता है, उसकी निःसन्देह समस्त अभीष्ट सिद्धि प्राप्त होती है। ब्राह्मण, क्षत्रिय, वैश्य, शूद्र तथा विशेषकर स्त्रियों के लिए यह हनुमद्व्रत समस्त सम्पत्ति को तत्क्षण देने वाला है। इस व्रत को जो भी विधि-विधान पूर्वक करता है। उसके समस्त कार्य सत्य ( निश्चित ) ही सिद्ध होते

नमस्ते नमस्ते सदाऽभीष्टदात-
र्नमस्ते नमस्तेऽनिशं रामभक्त ! ॥७८॥

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिकृत-हनुमद् - रहस्ये भविष्योत्तरपुराणे व्यासप्रोक्त-हनुमद्-व्रतकथा समाप्ता ।

*

# हनुमल्लक्ष-प्रदक्षिणा-विधानम्

युधिष्ठिर उवाच

भगवन् ! ज्ञानिनां श्रेष्ठ ! सर्वविद्याविशारद ! ।
किञ्चिद् विज्ञप्तुमिच्छामि वक्तुमर्हस्यशेषतः ॥ १ ॥
अज्ञानादथवा ज्ञानात् प्रमादाद् वा कृतानि हि ।
पापानि सुबहून्यत्र विलयं यान्ति तद् वद ! ॥ २ ॥

व्यास उवाच

लक्षप्रदक्षिणा कार्या गोऽग्नि-द्विज-हनूमताम् ।
पृच्छते नारदायेति प्राह ब्रह्मा शृणुष्व तत् ॥ ३ ॥

---

हैं ॥७५-७७॥ हे वायुपुत्र ! भविष्य के निर्माण करने वाले, अपने भक्तों को अभीष्ट वर प्रदान करने वाले तथा निरन्तर राम की सेवा में तत्पर ऐसे आपको बारम्बार नमस्कार है ॥७८॥

इस प्रकार पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत 'शिवदत्ती' हिन्दी व्याख्या सहित हनुमद्-रहस्य में भविष्योत्तरपुराणस्थित व्यासविरचित हनुमद्-व्रत-कथा समाप्त ।

नारद उवाच

ये च पापरता नित्यं धर्माऽधर्म-विवर्जिताः ।
व्रतहीना दुराचारा ज्ञानहीनाश्च जन्तवः ॥ ४ ॥
तेषां पापविनाशार्थं प्रायश्चित्तं कथं भवेत् ? ।

ब्रह्मोवाच

किं वर्णयामि साधूनां माहात्म्यं च भवादृशाम् ॥ ५ ॥
साधु साधु च विप्रेन्द्र ! वच्मि ते व्रतमुत्तमम् ।
ब्रह्महत्यादिपापेषु सङ्कलीकरणेषु च ॥ ६ ॥
जातिभ्रंशकरे वाऽपि अभक्ष्य-भक्षणे तथा ।
विष्णुना निर्मितं पूर्वं व्रतं लक्षप्रदक्षिणम् ॥ ७ ॥
सर्वेषामपि पापानां नाशकं परमं शुभम् ।
आषाढे शुक्लपक्षे तु एकादश्यां विशेषतः ॥ ८ ॥
द्वादश्यां पौर्णमास्यां वा प्रारभेद् व्रतमुत्तमम् ।
देशकालौ तु सङ्कीर्त्य नत्वा गुरु-विनायकौ ॥ ९ ॥
लक्षप्रदक्षिणाः कार्या त्रीनग्नींश्च शुचिव्रत ।
जितेन्द्रियो जितप्राणो मुखेन मनुमुच्चरेत् ॥१०॥
नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ।
नम आहवनीयाय महावेद्यै नमो नमः ॥११॥
गवां प्रदक्षिणाः कार्या लक्षसंख्या यथाविधि ।
पूर्वं पूज्य च गामेकां दत्वा नैवेद्यमुत्तमम् ॥१२॥
पश्चात् प्रदक्षिणाः कार्या नत्वा तां च पुनः पुनः ।
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ॥१३॥

यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च।
एवं प्रदक्षिणाः कृत्वा सर्वपापैः प्रमुच्यते ॥१४॥
कर्मनिष्ठं शुचिं विप्रं पूजयेद् विधिवत् बुधः।
ततः प्रदक्षिणाः कार्या यावल्लक्षं भवेद् व्रती ॥१५॥
भूमिदेव ! नमस्तुभ्यं नमस्ते ब्रह्मरूपिणे।
पूजितो देवदैत्यैस्त्वमतः शान्तिं प्रयच्छ मे ॥१६॥
एवं हनुमते कार्या भूत-प्रेतविनाशिने।
षोडशैरुपचारैश्च पूजयेद् वायुनन्दनम् ॥१७॥
ततः प्रदक्षिणाः कुर्यादात्मकार्यार्थसिद्धये ॥१८॥
मनोजवं मारुत-तुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥१९॥
एवं प्रदक्षिणावर्तं कुर्याद् देवं प्रयत्नतः।
भूत-प्रेत-पिशाचाद्या विनश्यन्ति न संशयः ॥२०॥
आदित्यादिग्रहाः सर्वे शान्तिं यान्ति शिवाज्ञया।
उद्यापनं च सर्वासां कुर्यात् पूर्णफलाप्तये ॥२१॥
उद्यापन-विधानादौ पुण्याहं वाचयेत्ततः।
आचार्यं वरयित्वा च प्रतिमाः स्वर्णसम्भवाः ॥२२॥
अव्रणं कलशं पूर्णं स्थापयेन्मण्डले शुभे।
विरच्य लिङ्गतोभद्रं पूजयेद् देवमञ्जसा ॥२३॥
पायसं जुहुयात्तत्र तत्तन्मन्त्रैर्विचक्षणः।
अष्टोत्तरसहस्रं तु प्रायश्चित्तं चरेच्छुभम् ॥२४॥

मण्डलं दक्षिणायुक्तमाचार्याय निवेदयेत् ।
ब्राह्मणान् भोजयेच्छक्त्या वित्तशाठ्यविवर्जितः ॥२५॥
ये कुर्वन्ति व्रतमिदं पापमुक्ता भवन्ति ते ।
भुक्त्वा यथेप्सितान् भोगानन्ते सायुज्यमाप्नुयुः ॥२६॥

अथ प्रयोगः

'देशकालौ स्मृत्वा, मम भूत-प्रेत-पिशाचादि-बाधा-परिहार-द्वारा आदित्यादि-नवग्रहशान्ति-द्वारा वा श्रीमन्महारुद्र-हनुमत्प्रीत्यर्थममुकसंख्याप्रदक्षिणां करिष्ये', इति संकल्प्य, षोडशोपचारैर्हनुमन्तं पूजयित्वा प्रदक्षिणाः कार्याः ।

तत्र मन्त्रः

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥

इति मन्त्रं पठन्, प्रदक्षिणाः प्रतिदिनं नियमानुसारं कृत्वा, उत्तरपूजां कृत्वा प्रार्थयेत् ।

अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात् कारुण्यभावेन रक्ष मां परमेश्वर ! ॥ १ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ! ।
यत्पूजितं मया देव ! परिपूर्णं तदस्तु मे ॥ २ ॥

इति क्षमाप्य, अनेनाऽमुकसंख्याप्रदक्षिणाख्येन कर्मणा श्रीहनुमद्देवता प्रीयताम् ।

इति हनुमद्-रहस्ये बृहज्ज्योतिषार्णवस्थ-हनुमदुपासनाध्याये लक्षप्रदक्षिणाविधानं समाप्तम् ।

*

## हनुमद्-दीपदान-विधिः

उक्तं च सुदर्शनसंहितायाम्—

अथाऽतः संप्रवक्ष्यामि दीपदानं हनूमतः ।
येन विज्ञानमात्रेण सिद्धो भवति साधकः ॥ १ ॥
दीपदानप्रमाणं तु सावधानादिदं शृणु ।
प्रमाणं तं तु वक्ष्यामि पञ्चमानमनुक्रमात् ॥ २ ॥
स्थानं भेदं च मन्त्रं च दीपदाने मनुं पृथक् ।
पुष्पवासिततैलं च सर्वकामफलप्रदम् ॥ ३ ॥
तिलतैलं श्रियो हेतुः पृथिकागमनाय च ।
अतसीतैलमुद्दिष्टं यशःकर्मणि निश्चितम् ॥ ४ ॥
सार्षपं रोगनाशाय सर्वव्याधिविनाशकम् ।
मारणे राजिकाजातं तथा वैभीतकादिकम् ॥ ५ ॥
उच्चाटे च करञ्जोत्थं विद्वेषे मधुवृक्षजम् ।
अलाभे सर्वतैलं च तिलतैलमनुत्तमम् ॥ ६ ॥
गोधूमं च तिलं माषं मुद्गं वै तण्डुलं क्रमात् ।
पञ्चधान्यमिदं प्रोक्तं नित्य दीप उदाहृतम् ॥ ७ ॥
पञ्चधान्यसमुद्भूत-पिष्टपात्रं सुशोभनम् ।
सर्वकाममिदं प्रोक्तं सर्वदा दीपदापने ॥ ८ ॥
वश्ये तण्डुलपिष्टं च मारणे माषपिष्टकम् ।
उच्चाटने तिलं कृष्णं यवपिष्टं प्रकीर्तितम् ॥ ९ ॥
पान्थस्यागमने प्रोक्तं गोधूमोत्थं स-तण्डुलम् ।
मोहने तण्डुलं पिष्टमाकर्षे मुद्गपिष्टकम् ॥१०॥

संग्रामे केवलं माषं कृत्वा दीपं च पात्रके ।
सन्धौ त्रिपलजं प्रोक्तं लक्ष्मीः कस्तूरिका मता ॥११॥
एला- लवङ्ग - कर्पूर - मृगनाभि-सुसंयुता ।
कन्यकावरणे राजवश्ये सर्वं तथैव च ॥१२॥
अलाभे सर्ववस्तूनां पञ्चधान्यं परं मतम् ।
अष्टमुष्टि भवेत् किञ्चित् किञ्चित् पिष्टं तु पुष्कलम् ॥१३॥
पञ्च सप्त तथा रौद्रं प्रमाणं च यथाक्रमम् ।
सुगन्धं नैव मानं स्याद्यथारुचि समं मतम् ॥१४॥
नित्यदीपः प्रकर्त्तव्यस्ताम्रपात्रे हनूमतः ।
सोमवारे तथा ध्यात्वा जलाप्लावं च कारयेत् ॥१५॥
पश्चात् प्रमाणतो ग्राह्यं क्रमशो हस्तमानकम् ।
तत् पिष्टं शुद्धपात्रे तु नदीतोयेन शोधितम् ॥१६॥
दीपपात्रं ततः कुर्याच्छुद्धो नियतमानसः ।
दीपे पात्रे योज्यमाने मारुतेः कवचं पठेत् ॥१७॥

इति पात्रविधिः ।

मालानूनाश्च ये वर्णाः साध्यनामसमन्विताः ।
वर्तिकायाः प्रकर्तव्यास्तन्तवस्तत्प्रमाणतः ॥१८॥
त्रिंशांशेनैव सा रम्या गुरुकार्येऽखिले मता ।
कूटतुल्या स्मृता नित्या सामान्याऽथ विशेषतः ॥१९॥
रुद्रकूटगुणा प्रोक्ता न पात्रं च विचालयेत् ।
एकविंशति-संख्याकास्तन्तवो निर्मला मताः ॥२०॥

रक्तसूत्रं हनुमतो दीपदाने प्रकीर्तितम् ।
कृष्णमुच्चाटने प्रोक्तं द्वेषमारणकर्मणि ॥२१॥
कट्टतुल्यपलं तैलं गुरुकार्येऽष्टसंगुणम् ।
नित्ये पञ्चपलं प्रोक्तमथवा मनसो रुचिः ॥२२॥
हनुमत्प्रतिमायास्तु सन्निधौ दीपदापनम् ।
प्रतिमा दीपसहिता ग्रह-भूतग्रहेषु च ॥२३॥
चतुष्पथे तथा प्रोक्तं दीपदानमनन्तरम् ।
सन्निधौ स्फाटिके लिङ्गे शालग्रामस्य सन्निधौ ॥२४॥
नानाभोगाश्रयं प्रोक्तं दीपदानं हनूमतः ।
गणेशसन्निधौ विष्णोर्महासङ्कटनाशनम् ॥२५॥
विष-व्याधि-महाघोरे हनुमत्-सन्निधौ कुरु ।
दुर्गायाः सन्निधौ प्रोक्तं संग्रामे घोरसङ्कटे ॥२६॥
द्यूते वृष्टिस्थले चैव विशेषान् मारणे तथा ।
व्याधिनाशे तुण्डबन्धे दुष्टदृष्टौ तथैव च ॥२७॥
राजद्वारे बन्धमुक्तौ गुरुकार्ये प्रयत्नतः ।
गजस्य मस्तके चैव राज्यलक्ष्मीसमृद्धये ॥२८॥
स्त्रीवशीकरणे दीपो वापीतीरे सरोवरे ।
विप्र-क्षत्रिय-विट्-शूद्रवश्ये विप्रालये शुभम् ॥२९॥
जपे पूर्वमुखः कार्य उच्चाटे वायवः स्मृतः ।
सर्ववश्ये च कर्त्तव्यो दीपो याम्यादिशामुखः ॥३०॥
मारणे भेदकार्ये च कर्तव्यो राक्षसीमुखः ।
शान्तिके पौष्टिके सन्धौ कन्यापुत्राप्तये तथा ॥३१॥

अभिचारार्थसिद्ध्यर्थे दीपः कार्यो जलाश्रितः ।
स्तम्भने भूतदमने शाकिनीनां च विग्रहे ॥३२॥
व्यन्तराणां च यक्षाणां पवनाभिमुखं कुरु ।
धानेशो धन-धान्यादि राज्यलक्ष्मीसमृद्धये ॥३३॥
दीपः कार्यो महायोगे पान्थस्यागमनाय च ।
ईशानाभिमुखः कार्यः सर्वऋद्धिविवृद्धये ॥३४॥
सर्वेषु गुरुकार्येषु राजपत्नीवशे तथा ।
वृष्टेः समागमार्थाय देशस्योत्सादनाय च ॥३५॥
देवतासम्मुखः कार्यो दीपः शून्ये प्रकल्पयेत् ।
वृष्टि-वृक्षादि-निष्पत्तौ दुर्गे तोयप्रशोषणे ॥३६॥
विवरादि-प्रवेशेषु भूमिस्थ-धनकर्षणे ।
गण्डभेदेषु सर्वेषु शृङ्खलाबन्धमोचने ॥३७॥
खातं कृत्वा करोन्मानं चतुरस्रं सुशोभनम् ।
तन्मध्ये स्थापयेद् दीपं दक्षिणाभिमुखं तथा ॥३८॥
पात्रधारणयन्त्र तु विशेषेण निशामय ।
स्वर्णरूपोद्भवं ताम्रं त्रपुलोहोद्भवं तथा ॥३९॥
नागपात्रं विशेषेण वश्यादिषु च कर्मसु ।
पात्राधारे तु षट्कोणे तथा बीजानि विन्यसेत् ॥४०॥
हौं हौं हौं हां फ्रें हौं क्रमात् ।
अग्निकोणं समाश्रित्य कोणे कोणे यथाक्रमम् ।
मध्ये हनुमद्-गायत्रीं तां शृणुष्व षडानन ॥४१॥

रामदूताय विद्महे वायुपुत्राय धीमहि ।
तन्नो हनुमान् प्रचोदयात् ॥

ततो मन्त्रेण दीपपात्रं वेष्टयेत् ।

'ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं वज्रतुण्डकाय लङ्कश्वरवधाय महासेतुबन्धाय महाशैलप्रवाह-गगनेचर एह्येहि भगवन् महाबल-पराक्रम-भैरवायाऽऽज्ञा एह्येहि महारौद्र दीर्घपुच्छेन वेष्टय वैरिणो भञ्जय भञ्जय हुँ फट्' इति मन्त्रं समुच्चार्य, ब्रह्मचर्यंजप जपेत् ।

पञ्चाशदधिकं पात्रे यन्त्रं मन्त्रेण वेष्टयेत् ।
छुरिका अग्रतः स्थाप्या करवीरैश्च पूजयेत् ॥४२॥
अथ मन्त्रं प्रवक्ष्यामि मन्त्रेण च प्रपूजयेत् ।

ॐ ऐं श्रीं ह्रां ह्रीं ह्रूँ ह्रैं ह्रौं ह्रैं फ्रें हनुमान् प्रकटपराक्रम आक्रान्त-दिङ्मण्डल-यशोधवलीकृत-जगत्त्रितय वज्रदेह ज्वलत्सूर्य-कोटिसप्रभ तनुरुद्रावतार लङ्कापुरदन उदधिलंघन-दशग्रीवशिरःकृतान्त सीताश्वासनिवारक वायुसुत अञ्जनिगर्भसम्भूत श्रीरामलक्ष्मणानन्दकर-कपिसैन्यप्राकार-सुग्रीवसख्यकारण - बलिनिबर्हण द्रोणपर्वतोत्पाटन अशोकवनविदारण अक्षकास्यच्छेदन वनरक्षाकार-समूहभञ्जन ब्रह्मास्त्र-ब्रह्मशक्तिग्रसन लक्ष्मणशक्तिभेदन लक्ष्मणशक्तिभेदननिवारण शिशुसमानपीनबालादित्य-सानुग्रसन मेघनादहोमविध्वंसन इन्द्रजिद्वधकारण सीतारक्षक-राक्षसविदारण कुम्भकर्णादि-वधपरायण श्रीरामभक्तितत्पर व्योमद्रुमोल्लंघन-महासामर्थ्य-महातेजःपुञ्जविराजमान स्वामि-वचनसम्पादित-अर्जुनसयुगसहाय, कुमार-ब्रह्मचारी गम्भीरस्वर

दक्षिणांशमार्तण्ड-मेरुपर्वतोत्पाटकचरण, सर्वदुष्टनिबर्हण-व्याघ्रादिभयनिवारण-सर्वशत्रुच्छेदनसमपरस्य त्रिभुवन-स्त्री-पुं-नपुंसकात्मकं सर्वजीवजातं वशय वशय, ममाज्ञाकारं सम्पादय सम्पादय नानानामधेयान् राज्ञः सपरिवारान् मम सेवकान् कुरु कुरु, सर्ववश्य-अविषाणविध्वंसय विध्वंसय प्रबलानि परसैन्यानि क्षोभय क्षोभय संकार्यादिनादिति साधय साधय सर्वदुर्जनानां मुखानि स्तम्भय कीलय घेघेघे हाहाहा हुंहुंहुं फट् स्वाहा ।

मन्त्रमेतत् पठेन्नित्यं यावद् दीपं समापयेत् ।
दीपाग्रे पठमानस्तु मनोवांछितमाप्नुयात् ॥४३॥

विधिः

भूमिशायी नक्तभोजी वर्णमाला समन्वितः ।
कपीश्वरं स्मरेन्नित्यमेकविंशतिवासरान् ॥४४॥
प्रमाण दीपकरणे कार्यसिद्धिः प्रजायते ।
शकुनान् संप्रवक्ष्यामि आगमोक्तप्रमाणकान् ॥४५॥
कार्पासं रसकुम्भं च विद्धाङ्गं चाऽङ्गवर्जितम् ।
अधिकाङ्गं दुष्टबुद्धिं दृष्ट्वा कार्यं न जायते ॥४६॥
सुवासिनीं सुपुरुषं फलं गां वत्ससंयुताम् ।
तुरङ्गं गजखङ्गं च दृष्ट्वा बाद्यं सुखप्रदम् ॥४७॥
एवं दीपविधानं च मयोक्तं ते विशेषतः ।
हिताय जगतां पुत्र ! तत्क्षणात् सिद्धिकारकम् ॥४८॥
तस्मात् सर्वप्रयत्नेन देयं कृत्वा परीक्षणम् ।
देवानां च यथा विष्णुर्नदीनां जाह्नवी तथा ॥४९॥

तक्षकः सर्वनागानां धेनूनां कामधुक् तथा ।
तथा सुदर्शन चेयं संहिता परिकीर्तिता ॥५०॥
विष्णुभक्ताय शान्ताय कान्ताय वशवर्तिने ।
सुभक्ताय सुशिष्याय व्रतज्ञाय प्रकाशयेत् ॥५१॥
यथा माहिष्मतीनाथस्तथा वायुसुतः स्मृतः ।
उभयोरन्तरं नास्ति कृत्वा पापमवाप्नुयात् ॥५२॥

इति पण्डित-श्रीशिवदत्तमिश्राशास्त्रि-विरचिते हनुमद्-रहस्ये सुदर्शनसंहितोक्ता हनुमद्-दीपदानविधिः समाप्ता ।



## हनुमत्-अनुष्ठान-विधानम्

१. हनुमान् चालीसा का पाठ—

हनुमान्जी के मन्दिर, पीपलवृक्ष तथा घर में ही स्नान आदि नित्य क्रिया से निवृत्त हो, कुशासन या ऊर्णासन पर पूर्वाभिमुख बैठकर, धूप, दीप जलाकर हनुमान्जी का मानसिक ध्यान करता हुआ, शीघ्र फल-दायक प्रसिद्ध हनुमान्-चालीसा का सौ पाठ करने से मुकदमे में विजय अवश्य प्राप्त होती है ।

२. समस्त कार्यों में सिद्धि दायक मन्त्र —

दीनानुबन्धि मेधावि प्रेमाऽब्धि रामवल्लभ ! ।
यद्येयं मारुते वीर ! मेऽभीष्टं देहि सत्त्वरम् ॥

इस मन्त्र का पूर्वोक्त विधान से एक लाख जप, उसका दशांश हवन तथा हवन का दशांश तर्पण, तर्पण का दशांश मार्जन एवं मार्जन का दशांश ब्राह्मण-भोजन कराने से निश्चित ही समस्त कार्य सिद्ध हाते हैं ।

३. शत्रु आदि पर विजय प्राप्त करने का विधान—

पीपल वृक्ष के नीचे अथवा हनुमान्‌जी के मन्दिर में हनुमान्‌जी का विधि-विधान पूर्वक पूजन कर, शत्रुंजय हनुमत्-स्तोत्र का प्रतिदिन बारह, पन्द्रह या इक्कीस पाठ, इकतीस दिन तक नियमपूर्वक करने से निश्चय ही हनुमान्‌जी की कृपा से समस्त शत्रु नष्ट होते हैं।

४. भयंकर आपत्ति नष्ट करने का मन्त्र—

**त्वमस्मिन् कार्यनिर्वाहे प्रमाणं हरिसत्तम !।**
**तस्य चिन्तयतो यत्नो दुःखक्षयकरो भवेत् ॥**

( अथवा )

**आपदामपहर्तारं दातारं सर्वसम्पदाम्।**
**लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥**

पूर्वाभिमुख बैठकर पीपल वृक्ष या हनुमान् जी के मन्दिर अथवा गृह में ही स-विधि हनुमत्-पूजन कर इन दोनों में किसी एक मन्त्र की एक माला या सत्ताईस बार तथा अशक्ति में ग्यारह बार भी एक मास पर्यन्त पाठ करने से समस्त आपत्तियाँ नष्ट होती हैं।

५. हनुमत् सहस्रनाम-प्रदक्षिणा विधान—

जो व्यक्ति श्री हनुमान्‌जी का विधिवत् पूजन कर, उनकी तथा पीपल वृक्ष की मंगलवार या शनिवार को हनुमत् सहस्रनामस्तोत्र का पाठ करते हुए एक सौ आठ, हजार अथवा एक लाख प्रदक्षिणा करता है, या ब्राह्मणों द्वारा कराता है, उसके समस्त कष्ट नष्ट होते हैं तथा निःसन्देह उसे सभी सम्पत्तियाँ प्राप्त होती हैं और संग्राम में शत्रुओं का विनाश, एवं ज्वर, मृगी रोग, वायुगोला, प्लीहा (बरवट) आदि सभी भयंकर रोग नष्ट होते हैं। यदि सहस्र नाम पाठ करने में असमर्थ हो तो हनुमान् चालीसा से ही प्रदक्षिणा द्वारा ऊपर कहे हुए समस्त कार्य सिद्ध होते हैं, यह अनुभूत प्रयोग है।

६. गुदभ्रंश निवारक ( काँच निकलने का ) अनुभूत प्रयोग—

मंगलवार के दिन रोगी को कमर में हनुमान्‌जी का नाम लेकर गुँदी वृक्ष की जड़ को बाँधने से उपर्युक्त रोग निश्चित ही शान्त होता है। यदि लाभ हो जाय तो भक्तराज हनुमान्‌जी को शुद्ध घी में सिन्दूर मिलाकर लगावे। पुनः उनका विधिवत् पूजन करना चाहिए।

७. सभी रोगों के झाड़ने का मन्त्र—

**(१) ॐ ऐं श्रीं ह्रां ह्रीं ह्रं ह्स्फ्रें ह्स्फ्रें ह्सौं ह्सौं ॐ नमो हनुमते मम परस्य च क्षय-कुष्ठ-गण्डमाला-स्फोटकं क्षतज्वर-मैकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं सन्ततज्वरं सान्निपातिक-ज्वरं भूतज्वर मन्त्रज्वर-शूल-भगन्दर-मूलकृच्छ-कपालशूल-कर्णशूला-ऽक्षिशूलोदरशूल - हस्तशूल-पादशूलादीन् सर्वव्याधीन् क्षणेन भिन्धि भिन्धि छिन्धि छिन्धि नाशय नाशय निकृन्तय निकृन्तय छेदय छेदय भेदय भेदय महावीर हनुमन् ह्रां ह्रां घे घे ह्रीं ह्रीं ह्रूं ह्रूं फट् स्वाहा।**

शनिवार एवं मंगलवार के दिन हनुमान्‌जी का मानसिक ध्यान कर, चाकू तथा कुशा द्वारा एक सौ सत्तर अक्षर वाले उपर्युक्त मन्त्रसे झाड़ने पर,क्षय, कुष्ठ, कण्ठमाला, एक दिन, दो दिन, तीन-तीन, चार दिन पर आने वाले ज्वर, सन्निपात, भूतज्वर, मन्त्रज्वर, शूल, भगन्दर, मूत्रकृच्छ, अधकपारी, कर्णशूल, अक्षिशूल, उदरशूल, हस्तशूल, पादशूल आदि सभी रोग समूल नष्ट होते हैं।

८. भूत-प्रेत, आदि झाड़ने का मन्त्र—

**( २ ) ॐ ए श्रीं ह्रां ह्रीं ह्रूं स्फ्रें ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं ॐ नमो हनुमते महाबलपराक्रम मम परस्य च भूत-प्रेत-पिशाच-शाकिनी - डाकिनी - यक्षिणी-पूतना-मारी-महामारी-कृत्या-यक्ष-**

राक्षस भैरव-वेताल-ग्रह-ब्रह्मग्रह-ब्रह्मराक्षसादिकजात-क्रूरबाधान् क्षणेन हन हन जृम्भय जृम्भय निरासय निरासय वारय वारय बन्धय बन्धय नुद नुद सूद सूद धुनु धुनु मोचय मोचय मामेनं च रक्ष रक्ष रक्ष महामाहेश्वर रुद्रावतार हाहाहा हुं हुं हुं हुं हुं हुं घे घे घे हूं फट् स्वाहा।

श्री हनुमान्‌जी का मानसिक ध्यान कर, भूत-प्रेत आदि बाधाग्रस्त रोगी पर एक सौ इकहत्तर अक्षर वाले इस मन्त्र को पढ़ता हुआ सरसों का दाना फेंकने से भूत, प्रेत, पिशाच, डाकिनी, शाकिनी, यक्षिणी, पूतना, मारी, महामारी, कृत्या, यक्ष, राक्षस, भैरव, वेताल, ग्रह, ब्रह्मग्रह तथा राक्षस आदि से उत्पन्न भयंकर क्रूर बाधाएँ तत्क्षण नष्ट हो जाती हैं।

९. सभी प्रकार के भय एवं विष झाड़ने का मन्त्र—

(३) ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्रौं ह्स्ख्फ्रें ह्सौं ह्स्ख्फ्रें ह्सौं नमो हनुमते मम परस्य च महाभयानि सर्प-व्याघ्र-तस्कर-जलाग्नि-विष-जङ्गम-स्थावर - सहज-कृत्रिमोपविष-महासंग्रामारण्य-वाद-विवाद-शस्त्रा-ऽस्त्राग्न्यादिकानि संहर संहर विनाशय विनाशय दुःखं संग्रासय संग्रासय त्रोटय त्रोटय भंज भंज भंजय भंजय स्तम्भय स्तम्भय कुण्ठय कुण्ठय मोचय मोचय वानर-ऋक्ष-महावीर मामेनं च रक्ष रक्ष हांहांहां हुं हुं हूं घेघेघे हूं फट् स्वाहा।

एक सौ इकसठ अक्षर वाले हनुमान्‌जी के इस मन्त्र से झाड़ने पर सर्प, व्याघ्र, चोर, जल, अग्नि, विष, जंगम, स्थावर, आकस्मिक (एक-ब-एक) किसी प्रकार की भी औषधि द्वारा उत्पन्न विष, भयंकर संग्राम, अरण्य, वाद-विवाद, अस्त्र-शस्त्र, अग्नि आदि द्वारा उत्पन्न समस्त भय तत्क्षण विनष्ट होते हैं।

१०. समस्त शत्रुओं को नष्ट करने वाला मन्त्र—

(४) ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्फ्रें ह्ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं नमो हनुमते राक्षसकुल-दावानल-द्वादशार्क-कोटचर्कप्रभज्वलत्-तनूरुह भीमनाद मम परस्य च दुष्ट-दुर्जन-महापकारक-वादि-विवादि-द्वेषकारक - कार्यभञ्जनक-क्रूरप्रकृतिक-प्रवृद्धकोपावेशक-हन्तुकामुकादीन् दूरस्थान् समीपस्थान् भूत-भविष्यद्-वर्तमनान् पुं-स्त्री-नपुंसकांश्चातुर्वर्ण्यान् क्षणेन सत्वरं हन हन दह दह संहारय संहारय मोहय मोहय मर्दय मर्दय द्वेषय द्वेषय मार्जार-मूषक-वत्सद्यः प्राणैर्वियोजय वियोजय विध्वंसय सिध्वंसय हिह्लि-हिल्लि मूकय मूकय जारय जारय बन्धय बन्धय जृम्भय जृम्भय पातय पातय मम परस्य च पादतलाक्रमितान् कुरु कुरु दासीभूतान् सम्पादय सम्पादय हाहाहा हुं हुं हुं घेघेघे ह्रूं फट् स्वाहा।

हनुमान्जी का षोडशोपचार से पूजन कर, दो सौ पैंसठ अक्षरवाले इस मन्त्र का जप करने से समस्त शत्रु अपने-आप नष्ट होते हैं।

११. समस्त राजकुल एवं मन्त्रिकुल शत्रुओं का विनाशक मन्त्र—

(५) ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्फ्रें ह्ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं नमो हनुमते त्रैलोक्याक्रमणपराक्रम श्रीरामभक्त मम परस्य च शत्रूंश्चतुर्वर्णसम्भवान् पुं-स्त्री-नपुंसकान् भूत-भविष्याद्-वर्तमानान् दूरस्थान् समीपस्थान् नानानामधेयान् नानासङ्करजातीयान् कलत्र-पुत्र-मित्र-बन्धु-सुहृत्समेतान् प्रभुशक्तिसहितान धन-धान्यादि-सम्पत्तिसंयुक्तान् राजपुत्रसेवकान् मन्त्रि-सचिव-सखीनात्यन्तिकान् क्षणेन त्वरया एतद्-दिनावधि-नानोपायै-मारय मारय शस्त्रैश्छेदय छेदय अग्निना ज्वालय ज्वालय

दाहय दाहय अक्षकुमारवत्पादतलाक्रमणेन शिलातले आत्रोटय आत्रोटय घातय घातय बन्धय बन्धय भूतसङ्घैः सह भक्षय भक्षय क्रुद्धचेतसा नखैर्विदारय विदारय देशादस्मादुच्चाटय उच्चाटय पिशाचवद् भ्रंशय भ्रंशय भ्रामय भ्रामय भयातुरान् विसंज्ञांस्तान् सद्यः कुरु कुरु भस्मीभूतानुद्धूलय उद्धूलय भक्त-जनवत्सल सीताशोकापहारक सर्वत्र मामेनं च रक्ष रक्ष हांहांहां हुं हुं हुं घेघेघे हूं फट् स्वाहा ।

विधि-विधान से हनुमान्‌जी का पूजन कर तीन सौ इकतालीस वर्ण वाले इस मन्त्र का जप करने से तत्क्षण राजकुल एवं मन्त्रिकुल में उत्पन्न समस्त शत्रुओं का नाश होता है ।

१२. समस्त दुष्टग्रह, ज्वर, विष, आपत्ति, सर्प, व्याघ्रादि भय तथा शत्रुनाशक मन्त्र—

(१) ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्ख्फ्रें ह्सौं ॐ नमो हनुमते प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोवितानधवलीकृत-जगत्त्रितयवज्रदेह ज्वलदग्नि-सूर्यकोटिसमप्रभ-तनूरुह - रुद्रावतार लङ्कापुरीदहन उदधिलंघन दशग्रीवशिरःकृतान्तक सीताश्वासन-वायुसुत अञ्जनीगर्भसम्भूत श्रीरामलक्ष्मणानन्दकर कपिसैन्य-प्राकार सुग्रीवसख्यकारण-बालिनिबर्हणकारण द्रोणपर्वतोत्पाटन अशोकवनविदारण अक्षकुमारकच्छेदन वनरक्षाकरसमूहविभञ्जन ब्रह्मास्त्र-ब्रह्मशक्तिग्रसन लक्ष्मणशक्तिभेदनिवारण शल्य-विशल्यौषधि समानयन बालोदितभानुमण्डलग्रसनमेघनादहोम-विध्वंसन इन्द्रजिद्वधकारण सीतारक्षक राक्षससंघविदारण

